# अथ मणिमञ्जरी

(श्री नारायणपंडिताचार्यविरचिता)

सत्यप्रमोदः. स.कट्टि।

। श्रीवेदव्यासायनमः। बालानां सुखबोधार्थं रामायणभागवतभारतमध्वशास्त्रादितत्वज्ञानार्थं मणिमंजर्याख्यकाव्यं चिकीर्षुः नारायणपंडिताचार्यः मङ्गलमाचरति ॥

वन्दे गोविन्दमानंदज्ञानदेहं पतिं श्रियः ।
श्रीमदानन्दतीर्थार्यवल्लभं परमक्षरम् ॥१॥

वन्दे गोविन्देति। प्रथमश्लोकेऽहमितिकर्तृपदाध्याहारः। तत्र न्यायस्तु। यत्रानवसरोऽन्यत्र पदंतत्रप्रतिष्ठितम्। वाक्यंवेत्ति सतां नीतिः सावकाशेन तद्भवेत् इति न्यायस्यायमर्थः । यत्र वाक्ये पदं विना महावाक्येऽवांतरवाक्यंविनाऽनवसरः विवक्षितार्थसिध्यभावस्तत्र पदं वाक्यं वा प्रतिष्ठितंअध्याहृतं भवति । यत्र तु सावकाशे अध्याहाराभावेपि विवक्षितार्थसिद्धिः तत्पदाध्याहारादिकंन भवेदितिसतांन्यायः। आनन्दज्ञानदेहं इत्यत्रआनन्दज्ञानेददातीतिदा ईहा चेष्टा यस्य तमित्यर्थः। अज्ञानां ज्ञानद इत्यादेःस्वभक्तेष्टदातृत्वं । तथा दुष्टानामानन्दज्ञाने दतिखंडयतीति दा ईहायस्येत्यनिष्टदैत्यनाशकत्वं चोक्तं भवति । श्रीमदानन्दतीर्थार्यवल्लभमित्यत्र श्रीमदानंदतीर्था विद्यन्ते स्वामित्वेन येषां तैरार्यवद्भिर्लभ्यत इति आयर्वल्लभस्तम् ॥ १ ॥

ससर्ज भगवानादौ त्रीन्गुणान्प्रकृतेःपरः ।
महत्तत्वं ततो विष्णुः सृष्टवान्ब्रह्मणस्तुम् ॥२॥

ससर्जेति ।। भगवान् वासुदेवः आदौ महत्तत्वोत्पत्तेः पूर्वं प्रकृतेः स्वप्रवेशेन जगत्सर्जनशक्त्युपेतजडप्रकृतेः सकाशात्सत्वरजस्तमसंज्ञकानित्यर्थः । ततःपूर्वोक्तसूक्ष्मगुणत्रयं सूक्ष्मरूपेण च विरिञ्चसृष्टयनंतरं । ततः गुणत्रयात्ब्रह्मणः तनुं शरीरं महत्तत्वं ससर्जेत्यर्थः । इयं स्थूलसृष्टिरिति ज्ञेयम् । ततो महत्तत्वतनुर्विरिञ्चः

म.मं. स्थूलात्मनैवाजनीत्युक्तेः ।। २ ।। स. १

महत्तत्त्वादहङ्कारं ससर्ज शिवविग्रहं ।
दैवान्देहान्मनःखानि खं च स त्रिविधात्ततः ॥३॥

महत्तत्वेति । महत्तत्वात् सत्वेनानुस्यूतरजोगुणेन प्रवृद्धान्महत्तत्वादित्यर्थः । शिवशरीरं तमःप्रधानमहङ्कारूपतत्वम् । ततः त्रिविधात् । वैकारिकतैजसतामसभेदेन त्रिःप्रकारादहंकारतत्वात् । वैङ्कारिकाहकारात् दैवान् देवविशिष्टान् देवसम्बान्धिदेहान् मनस्तत्वं च । तैजसअहङ्कारात् खानि दशेन्द्रियाणि तामसाहङ्कारात् खंआकाशं शब्दतत्वोत्पत्तिपूर्वकं ससर्जेत्यर्थः । खंमिन्द्रिये सुखे स्वर्गे शून्य इति विश्वः । नभोऽन्तरिक्षं गगनमनन्तंसुरवर्त्म खमित्यमरः । इत्युभयत्र ज्ञेयं ।। ३ ।।

आकाशादसृजद्वायुं वायोस्तेजो व्यजीजनत ।
तेजसःसलिलं तस्मात्पृथिवीमसृजद्विभुः ॥४॥

आकाशेति । आकाशात् आकाशाख्योपादानात् । पूर्वकारणसम्बन्धात्पूर्वपूर्वकारणानां उत्तरोत्तरकार्यं प्रति

उपयोगो ज्ञेयः । स्पर्शतन्मात्रापूर्वं भूतवायुं व्यजीजनत् । भूतवायो.सकाशात्रूपतन्मात्रापूर्वकं तेजः । तेजसः रसतन्मात्रापूर्वं जलम् । जलात् गंधतन्मात्रापूर्वं पृथिवीमिति बोध्यं । संक्षेप्रादल्पश्रुतिरेवोक्तेति ।। ४ ।।

ततःकूटस्थमसृजद्विधिं ब्रह्मांडविग्रहं ।
तस्मिंस्तु भगवान् भूयो भुवनानि चतुर्दश ।।५।।

एवं बहिः सृष्टिमुक्त्वा ब्रह्मांडांतः सृष्टिमाह । तत इति । भगवान् वासुदेवः ततःपूर्वसृष्टिचतुर्विंशतितत्वोत्पत्यनन्तरं । विधिं विरिंचंब्रह्मांडे विग्रहो यस्येति ब्रह्मांडविग्रहः । विग्रहःकलहः काये इति विश्वः। चतुर्विंशतितत्वांशैः सुवर्णात्मकस्ववीर्येणोत्पादितंब्रह्माण्डं कृत्वा तत्राभिमानविशिष्टं विधिमकरोत् । न तु ब्रह्मांडाख्यदेहविशिष्टम् । तदुक्तं भागवततात्पर्ये । महद्रूपादिना ब्रह्मदेवाश्चैव प्रजज्ञिरे । अण्डे तेषामभिव्यक्तिर्जनिरित्यभिधीयते। कूटस्थं निर्विकारं प्राकृतदेहविशिष्टवत्वेऽपि अन्यत्रसृष्टयादौ आसक्तमनस्त्वेऽपि अविरलज्ञानवत्वात् कल्याद्यावेशरहितं वा आखणाश्मसमो हि स इत्युक्तेः। ननु अज्ञानं तु चतुर्वारं द्विवारं भयमेव चेति । भयाज्ञानविकारश्रुतेः कथं कूटस्थत्वं ब्रह्मण इति चेत् शृणु तन्निष्ठाज्ञानभयादेर्भगवत्प्रीतिहेतुत्वेनचतुर्मुखस्य गुणत्वमेव । न दोषत्वं । अपि अल्पकालीनत्वादविद्यामान एव तदुक्तं ! भगवत्प्रीतये नित्यं ब्रह्मणोपि भयादयः । न वृथा तस्य भावस्यात्कश्चित्तेपि क्षणार्धगा इति । किञ्च अभयापि विभेतीवत्तद्वत्वात्तदुदीर्यत इति श्रियोऽपि भयप्रदर्शनं भगवत्प्रीतिसाधनं द्रष्टव्यं किमु ब्रह्मण इति । तस्मिन्ब्रह्माण्डावकाशे पातालादिचतुर्दशभुवनानि उपादानोपादेययोः भेदेन भुवनात्मकं एकं पद्मं स्वनाभौ असृजत् । पद्मे चतुर्मुखउत्पन्नः चतु

मुखात्सर्वे देवाश्च । तदुक्तं तस्मिन्प्रविष्टाहरिणैवसार्द्धंसर्वे सुरास्तस्य बभूव नाभे । लोकात्मकं पद्ममुष्य मध्ये पुनर्विरिंचोऽजनि सद्गुणात्मा । तस्मात्पुनः सर्वसुराः प्रसूता इति । अजस्यनाभाविचोक्तार्थे मानं । भूय इति पूर्वमसंसृष्टतया सृष्टानि चतुर्विंशतितत्वानि इदानीं ब्रह्माण्डादिरूपेण संसृष्टतया संसृष्टवानिति । तदुक्तं । असंसृष्टं च संसृष्टमित्यादिसंसृष्टमण्डं तद्गंचेत्यंतं प्रमाणं ध्येयम् । एतत्सर्वमनुक्तसमुच्चायकचकारा ल्लभ्यम् ॥ ५ ॥

तात्विकानथ दैवान्को वैराजः पुरुषोऽसृजत् ।
तथैव परमान्हसान् सनकादींश्च योगिनः ॥६॥

इदानीं नाभिपद्माज्जातः चतुर्मुखः कान्कानर्थानसृजदिति तत्राह । तात्विकानिति । अथ वैराजः पुरुषः विराट्ब्रह्माण्डं तदन्तर्गतत्वात्वैराजः कःब्रह्मा को ब्रह्मात्मनि लोकेष्विति विश्वः । मूर्ध्नि चित्ते जले काये मुखे-ब्रह्मणि मारुते । कामे लोभे सुवर्णे च कः शब्दो विबुधेस्मृत इति नानार्थध्वनौ । तात्विकान्तत्वाभिमानिनः गरुडशेषरुद्रेन्द्रादीन् स्वांगादिति शेषः । तथैव यथा स्वाङ्गात् देवान् तथा मनसः सनकादीन्। मानसा मे सुता युष्मत्पूर्वे वै सनकादय इति चतु र्मुखोक्तेः। कीदृशान्तान्परमान् उत्तमान् हंसान् संन्यासिन इति यावत् । योगिनः हरौ मनोयोगवतः। हंसो विहङ्गभेदः स्याद्धंसः पूष्णि हयान्तरे । योगितन्त्रादिभेदेन पुरुषात्मनि मत्सरे इति विश्वः ॥ ६ ॥

असुरान्दोषरूपानप्यविद्यां पाञ्चपर्वणीम् ।
वर्णाश्रमविशेषांश्च धर्मक्लृप्तिं च सोऽसृजत् ॥७॥

इदानीं दैत्यसृष्टिमाह । असुरानिति । दोषरूपानसुरान् कल्यादीन् पांचपर्वणीं । तमो मोहो महामोहस्त मिस्रोत्द्यंधसंज्ञकः । इति पंचपर्वाणि विद्यंते यस्यामिति तदुक्तं । तमस्तु शार्वरं प्रोक्तं मोहश्चैव विपर्ययः । तदा ग्रहो महामोहस्तामिस्रः क्रोध उच्यते । मरणं त्वंधतामिस्रमविद्यापंचपर्वकेति । यथा निर्दुष्टं ज्ञानं मोक्षसाधनं तथा निंद्यत्वेनाऽविद्याअसुरादिज्ञानमपि तज्ज्ञानं च तत्सृष्टिसापेक्षमिति । तान् सुरानप्यसृजदित्य परोऽर्थः । वर्णाश्रमविशेषान् ब्रह्मक्षत्रादिवर्णविशेषान् धर्मक्लृप्तिं तत्तज्जातियोग्यतया धर्ममर्यादामित्यर्थः ॥७॥

मरीच्यत्र्यादयःपुत्राअभूवन्परमेष्ठिनः । मरीचेःकश्यपो जज्ञे वामनस्य पिता वटोः ॥८॥

वक्ष्यमाणप्रधानप्रमेयकथोपोद्घातत्वेन मिथुनसृष्टिं वक्तुं किंचिदवशिष्टामंगसृष्टिमाह । मरीचोति मरीचिश्च अत्रिश्च मरीच्यत्री तौ आदिर्येषांते तथा । आदि पदात् अंगिराः पुलस्त्यः पुलहः क्रतुः भृगुर्वसिष्ठो दक्ष नारद एते ग्राह्याः । परमेष्ठिनश्चतुर्मुखस्य देहादिति शेषः अभूवन् । कस्मात्क इत्यतःप्रमाणं । उत्संगान्नारदो जज्ञे दक्षोंगुष्ठात्स्वयंभुवः । प्राणाद्वसिष्ठः संजातो भृगुस्त्वचिकरात्क्रतुः । पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयो ऋषिः । आंगिरा मुखतोक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत् । इति ध्येयं । अत्रादिपदेनाऽत्रेरपि ग्रहणसंभवेऽन्यान् कंठतोनुक्त्वा अत्रेः कंठतो वचनं कुत इति इयं शंका । हिमांशोरत्रिपुत्रस्येत्यादिवक्ष्यमाणकृष्णावतारस्यात्रिपुत्र-चंद्रवंशसंबंधसूचनायत्रेः कंठतो ग्रहणमिति परिहार्या । अन्यथा वंशविशेषज्ञानं अवतारयोर्दुर्घटं स्यादिति । कश्यपो ऋषिः प्रजेश्वरो बटुरूपी वामनस्य पिता तद्रूपप्रकटयिता ॥ ८ ॥ इदानीं मिथुनसृष्टिमाह । प्रजा इति । कश्यपः विविधा विलक्षणाः स्रष्टुमिच्छुः एतास्त्रियोऽवहत् ॥ ९ ॥ दित्यामिति । दैत्याःदित्यां

प्रजाःसिसृक्षु विविधाः अवहत्कस्यपो दितिं । अदितिं च दनुं कद्रुं कीकसां विनतामपि ९
दित्यां ततोऽभवन् दैत्या अदित्यां च सुराः पुनः । दनौ तु दानवाः कद्रौ नागा नाना विषोल्बणाः ॥१०॥
म.मं ३ कीकसायां यातुधानाः विनतायां तु पक्षिणः । महावीर्या सुताआसन् कश्यपस्य महात्मनः ॥११॥ स.१

जाताः दित्यदित्थादित्यपत्युत्तरपदाण्य इत्यपत्यार्थे आदिवृद्धौ दैत्या इति । पुनरिति मिथुनसृष्टिमपेक्ष्य कद्रौ नागाः सफणाः नानाअफणाः सर्पाः विषोल्बणाः विषैर्जाज्वल्यमानाः प्रकाशः प्रकटं स्पष्टं उल्बणं । विशदं स्फुटमिति यादवः ॥ १० ॥ कीकसायामिति । यातुधानाः यातूनि यातनाः धीयंते येषु ते ! यातुधानःपुण्यजन इति । पुण्यंजनो विपरीतलक्षणयेति अमरटीका। पक्षिणः गरुडादयः ।। ११ ।। मानवानामिति । कश्यपस्य पुत्रात् सूर्यात् मानवानां मनुष्याणां। मनुष्या मानुषा मर्त्या मनुजा मानवा नराः। पिता पातीति रक्षका राज इत्यर्थः । मनुर्वैवस्वतः ।। १२ ।। तस्येति । क्षुवतीति क्षुवन् क्षुतं कुर्वतः मनोर्वैवस्वतनामकश्राद्धदेवस्य घ्रा-

मानवानां पिता जज्ञे आदित्यात्कश्यपात्मजात् । मनुर्नाम महाप्राज्ञ एतन्मन्वंतरेश्वरः ॥१२॥

णात् नासापुटात् । क्लीबे घ्राणं गंधवहो घोणा नासा च नासिकेत्यमरः । इक्ष्वाकुः राजा रंगश्चासावश्विर-श्चेति रंगनाथं लेभे । अयोध्यास्थितस्येक्ष्वाकोः कथं श्रीरंगप्राप्तिरिति श्रीरंगमाहात्म्यादवसेया । तदभिप्राय-स्तु पद्मकल्पे । हरिनाभिपद्माज्जातो विरिंचो हर्युपदिष्टः तं प्रति तपस्तप्त्वा रंगेश्वरं सत्यलोके लेभे । स रंगेश्वरः सत्यलोकस्थः कथमयोध्यां गत इति नारदेन पृष्ठो रुद्र आह । अयोध्याधिपः इक्ष्वाकुः स्वगुरुं वसिष्ठं

प्रति लोकानां मम च कथं मुक्तिः स्यादिति अपृच्छत् । वसिष्टस्तं प्रति तपसा विरिञ्चमाराधय । विरिंचः तव रंगेश्वरं दास्यति तमपि रंगेश्वरं त्वद्वंशजरामो विभीषणाय दास्यति। विभीषणनीतं रंगं भवद्वंशाश्चोला अर्चयिष्यंति । तत्र कल्पं देवः स्थित्वा पुनः सत्यलोकमेष्यति । प्रतिकल्पमेव । ततो वसिष्ठाश्रमे सभार्य इक्ष्वाकुः तपस्तेपे । तपस्तुष्टश्चतुर्मुखः परमात्मानं तुष्टाव । रंगेश्वरस्तदभिप्रायतोऽहमयोध्यां गमिष्यामि तत्र युगचतुष्ठयं स्थित्वा । ततःकावेर्यां चंद्रपुष्कणीतीरे सप्तमन्वंतरशायित्वादि वसक्षये तत्रांतिकमुपेष्यामि । त्वं विमाने ओंकाराकारे मां अर्चिष्यसि । अतः इक्ष्वाकवे मां देहीत्युक्तो ब्रह्मा तार्क्ष्यांसे श्रीरंगमारोप्य तपोवने इक्ष्वाकुं प्रत्यायात् । तेन सत्कृतो ब्रह्मा श्रीरंगविमानं तस्मै ददौ । स चायोध्यां गतः अयोध्याभिमुखं श्रीरंगं प्रतिष्ठाप्य पूजयामासेति संक्षेपः ।। १३ ।।

तस्य घ्राणादभूच्छ्रीमानिक्ष्वाकुःक्षुवतो मनोः । तपस्तप्त्वा विरिंचात्स लेभे रंगेश्वरं हरिं ॥ १३ ॥
विकुक्षिस्तुगभूत्तस्य पुरंजयपुरोगमाः । तदन्वये व्यजायंत शूरा राजर्षयःपरे ॥ १४ ॥

२५

विकुक्षिरिति । तुक्पुत्रस्तनयः सूनुरपत्यं च । तुक्तोकश्चात्मजाः प्रजा इति धनंजयः । वेदनिघंट पंचदशसु अपत्यनामसुतुगिति पाठात् । तदन्वये विकुक्षिवंशे पुरंजयादयो राजश्रेष्ठा दिलीपाद्याः व्यजायंते ति ।। १४ ।। तस्मिन्निति। प्रसिद्धे सूर्यवंशे दशरथः दशदिक्षुरथो यस्येति । शाकपार्थिववत्समासः । स दशरथः विमाने भवं वैमानिकं स्ववंश्येनेक्ष्वाकुणा प्रसादितं विष्णुं श्रीरंगमर्चयन् महीं ररक्षेति । अस्य सार्वभौम

त्वोपपादनार्थं महतीमिति मह्या विशेषणं । यत्तदोर्नित्यसंबंधात्तच्छब्दो बोध्यः। स कः यः वैवस्वतमनुत्वप्र-
सित्धः स इति भावः। तदुक्तं वामने । श्रीविष्णुमाहात्म्यकथनावसरे। पश्चाद्भूपं समाहूय वचनं चेदमब्रवीत्।
भविष्यदंतरे भूयो मनुर्वैवस्वतो भव । तव वंशे भवाम्यंग रामो दाशरथिः स्वयं । पुनर्दशरथो भूत्वा त्वमेवा-
सि पिता मम । मद्दत्तपिंडदानेन मुक्तिस्ते भविता ध्रुवमिति ।।१५।। इदानीं श्रीरामचन्द्रावतारं कथयितुमु- स.१
म.मं पोद्घातयति । तस्मिन्काल इति । दशरथो राजा तस्मिन्काले । सर्वे इंद्रादयः सुराः पीडा संजाता येषांते
४ पीडिताः महाराक्षसैः रावणादिभिः । तदस्य संजातं तारकादिभ्यइतच् शरण्यं शरणार्हं ।। १६ ।। तइति ।

तस्मिन्वंशे दशरथो बभूवात्यंतभाग्यवान् । सोर्चन्वैमानिकं विष्णुं ररक्ष महतीं महीं ॥ १५ ॥
तस्मिन्काले सुराःसर्वे महाराक्षसपीडिताः । दुग्धाब्धिशायिनं विष्णुं शरण्यं शरणं ययुः ॥ १६ ॥
तआदिष्टाः श्रियः पत्या जज्ञिरे क्षितिमंडले । शाखामृगादिभावेन हनुमान् मारुतोऽभवत् ॥ १७ ॥

शाखामृगाः कपयः तेआदयो यस्य ऋक्षस्य तेषां भावोधर्मः। तेनतद्रूपेणेत्यर्थः। कपिप्लवंगप्ल वगशाखामृगबली-
मुखाः मर्कटोवानरःकीशइत्यमरः । मारुतः मुख्यप्राणः हनुमानभवत् लङ् . ।। १७ ।। अभयायेति । ततः
देवानामवतारार्थं आज्ञाप्रदानानंतरं रामनामा सर्वाभिरामत्वाद्वाऽऽत्मारामत्वाद्वा । रामाणांहृद्यत्वाद्वा रामा-
भिधः सन् । दशरथात् ल्यब्लोपे पंचमी। दशरथं निमित्तीकृत्य कौसल्याया दशरथपत्न्यामजायत। लङ्. ।
सतां भक्तानामभयाय मोक्षसुखार्थं । राक्षसानां खररावणादीनां हत्यै अंधंतमोनयनरूपवधार्थं ।। १८ ॥

अभयाय सतां हत्यै राक्षसानां ततो हरिः । रामनामा दशरथात् कौसल्यायामजायत ॥ १८ ॥

ततइति । ततः रामावतारानंतरं लक्ष्मणशत्रुघ्नौ सुमित्रायां नृपभार्यायां बभूवतुः । लिट् । नृपादित्युभयत्र योज्यं । केकयदेशाधिपतेः पुत्री कैकेयी तस्यां भरतो जज्ञे लिट् । सदा शुभरतः सदा शुभे विष्णौ रतः । ननु सुमित्रायाःद्वौ पुत्रौ अन्ययोस्त्वेकैक एव कुत इति शंका । पुत्रोत्पत्यर्थं दशरथेन पुत्रेष्टौ कृतायां तदा । राज्ञ इष्टिसमिद्धाग्नेः नारायणनियोगतः । उदतिष्ठन्महद्भूतं प्राजापत्यं रुचा ज्वलत् । सुवर्णपात्रे संपूर्णं पायसं पार्थिवाय तत् । दत्वेदं पुत्रियामिति तत्रैवांतर्दधेऽद्भुतं । कौसल्यामथ कल्याणीमाहूय महिषीं प्रियां । परमान्नं ददावर्द्धं परं तस्यै नराधिपः । अर्धादर्धं ततो भक्तं विभक्तं भक्तिमान् हरौ । पवित्रं ससुमित्रायै सुस्मित्रायै ददावथ ॥ तस्मादर्धादसावर्धं कैकेयीं प्रति दत्तवान् । परमर्धं सुमित्रायै पुनरेव प्रदत्तवान् तान्

ततो लक्ष्मणशत्रुघ्नौ सुमित्रायां बभूवतुः । कैकेय्यां भरतो जज्ञे सदा शुभरतो नृपात् ॥ १९ ॥

अन्ववर्धंत सम्यंचःकुमाराःसुकुमारकाः । चतुर्भिश्चतुरैः पुत्रैः पितार्थैरिव निर्बभौ ॥ २० ॥

पायसांशान् भुक्त्वा ता देव्यः शुशुभिरेधिकं । राघवान्निदधाद्गर्भे लेभिरे ता वरस्त्रियः । इति मानेन परिहार्या ॥१९॥ अन्ववर्धंत इति । ते कुमाराःबालकाः । कुमारो बालके स्कंदे युवराज इति विश्वः । अनु अग्रजानुजभावेनेत्यर्थः । अन्ववर्धंतवृधुवर्धने लङ् । कीदृशाः सम्यंचः प्रशंसनीयाः । सम्यग्बाढप्रशंसयोरिति

विश्वः । सुकुमाराः कोमलावयवाः। सुकुमारश्च पुंड्रेक्षौकोमलेत्वभिधानवदिति विश्वः। पिता दशरथः चतुरैः कुशलैः । यद्वा चतुरैः चारुकंठैःकंबुग्रीवैः । चतुरश्चारुकंठश्चेति विश्वः । कैरिव चतुर्भिरर्थैःधर्मार्थकाममोक्षैः निर्बभौ । अतिशयेन शुशुभे भा दीप्तौ लिट् ।। २० ।। विश्वामित्र इति । ततःदशरथस्य पुत्रचतुष्टयप्रा-

विश्वामित्रस्ततो यज्ञं निघ्नतो राक्षसेश्वरान् । निहंतुमनयन्नाथं रामदेवं सलक्ष्मणं ॥ २१ ॥
अटव्यां ताटकां हत्वा स सिद्धाश्रममेयिवान् । विधूय यज्ञविघ्नांश्च विदेहविषयं ययौ ॥ २२ ॥

प्त्यनंतरं विश्वस्य मित्रं विश्वामित्रः । मित्रे चर्षाविति । मित्रशब्दे परे दीर्घता ज्ञेया । स्वेन क्रियमाणं यज्ञं निघ्नतः राक्षसान् हंतुं श्रीराममनयत् । नीञ्प्रापणे स्वाश्रमं प्रतीति शेषः। कीदृशं सलक्षणं राज्ञोनुमत्येति ग्रंथांतरादवसेयं ॥ २१ ॥ अटव्यामिति । स रामः अटव्यां अरण्ये । अटव्यरण्यं विपिनमित्यमरः । ताटकां हत्वा सिद्धाश्रमं । बहवोत्र तपस्यंतः संतः सिद्धत्वमाप्नुयुः । तस्मात्सिद्धाश्रमो नामेत्युक्तेः । विश्वामित्राश्रमं एयिवान् प्राप । यज्ञविघ्नान् मारीचसुबाव्हादीन् राक्षसान् विधूय । विदेहनगरं देहाभिमानशून्यनगरस्थयज्ञभूमिं प्रति ययौ । या प्रापणे लिट् देशंवेति ।। २२ ।। राजाद्यैरिति । जनकाद्यैः पूजितःसः रामःअथपूजानंतरं ऐश्वरं ईश्वरसंबंधि तालप्रमाणं धनुः विभज्य जानकीं सीतामलभीष्ट । डुलभष्प्राप्तौ लुङ् प्राप । सुरेश्वरैःदेवश्रेष्ठैरुच्चैःस्तूयमानः ।।२३।। गच्छन्निति । देव्या सीतया सह अयोध्यां गच्छन् रामः व्यरोचत । विशेषेण शुशुभे । रुचिरदीप्तौ लङ् । सवसिष्ठःवसिष्ठेन सहितः सहानुजः सलक्ष्मणः किंवत्

विश्वकोश प्रतिपृ. अनं.

राजाद्यैःपूजितःसोथ विभज्य धनुरैश्वरं। जानकीमलभीष्टोच्चैःस्तूयमानःसुरेश्वरैः ॥ २३ ॥
गच्छन् देव्या सहायोध्यां सवसिष्ठः सहानुजः। कविकाव्ययुतज्योत्स्नाकांतवत्स व्यरोचत ॥२४॥

व्यरोचत्। कविकाव्ययुतज्योत्स्नाकांतवत् कविकाव्याभ्यां युतः ज्योत्स्नाकांतः तेन तुल्यं क्रियाचेद्वतिः। कविर्गुरुः। परःकविर्बृहस्पतिरिति भागवततात्पर्ये। काव्यः शुक्रः। शुक्रो दैत्यगुरुःकाव्य इत्यमरः। चंद्रिका कौमुदी ज्योत्स्नेत्यमरः। अन्यकाव्ये माघेपि। गुरुशुक्राभ्यां चंद्रस्य शोभा वर्धिता। गुरुकाव्यानुगां बिभ्रच्चांद्रीमभिनभश्श्रियं। सार्धमुद्धवसीरिभ्यामथासावासदच्छद इति ॥ २४ ॥ प्रविश्येति। तत्र नगरीं रेमे रमुक्रीडायां लिट्। सुखचिती तनुर्यस्येति। स्त्रियां मूर्तिस्तनुरित्यमरः। मातृः कौसल्यासुमित्राकैकेयीः पितरं दशरथं ताभिः मातृभिः सर्वैरिति पाठे समस्तैर्जनैरिति शेषः ॥ २५ ॥ रामेति। सतु रामराज्याभिषेकः

प्रविश्य नगरीं तत्र प्रवंद्य पितरं तथा। मातृश्चपूजितःसर्वैःस रेमे सुखचित्तनुः ॥ २५ ॥

कैकेय्या भरतमात्रा निजघ्ने निवारितः। मत्सुतो भरतः गां भूमिं। स्वर्गेषु पशुवाग्वज्रो दिङ्नेत्रघृणिभूजले। गौःस्वर्गे वृषभे रश्मौ वज्रे चंद्रमसि स्मृतः। अर्जुनीनेत्रदृग्बाणभूवाग्वारिषु गौर्मतेति विश्वः। अवेत् - अव रक्षणे लिङ्. पालयेत् ॥२६॥ रामदेव इति॥ रामदेवःवनाभिमुख्येन ययौ। मात्रार्थेचाभिमुख्ये च प्रतिदानादिषु प्रतीति विश्वः॥ किं कुर्वन् अशेषान् न विद्यते शेषःवधोत्तरावशिष्टांशो येषां ते तान् राक्ष-

सान् । राक्षसःकौणपःक्रव्यादित्यमरः । वध्यन् छेदयन् वधू छेदने । धक्ष्यन्निति पाठांतरं । अपि यथेष्टम् । अपि संभावनाप्रश्नशंकागर्हासमुच्चये । तथा युक्तपदार्थेषु कामचारक्रियासु चेति विश्वः ।। २७ ।। ध्वस्तेति । रामः लंकेशभगिनीं रावणस्य स्वसारं । जनयित्री प्रसूर्माता जननी भगिनी स्वसेत्यमरः। शूर्पणखां अनुजन्मना कनिष्ठभ्रात्रा लक्ष्मणेन ध्वस्तकर्णां छेदनेनाधः पतितकर्णां! कर्णशब्दग्रहौ श्रोत्रं श्रुति स्त्री श्रवणं श्रव इत्यमरः। तथाविघोणां विगता घोणा नासिका यस्यास्तां । क्लीबेघ्राणं गंधवहो घोणा नासा च नासिकेत्यमरः । कारयामास । आम्प्रत्ययांतः असभुवि लिट् ।।२८ ॥ रामेति । रामविप्रकृतः रामेणावमा-

रामराज्याभिषेकाय दध्रे दशरथो मनः। निजघ्ने स तु कैकेय्या मत्सुतो गामवेदिति ॥ २६ ॥

रामदेवस्तदा सीता लक्ष्मणाभ्यां समन्वितः। वनं प्रति ययौ वत्स्यन् अशेषानपि राक्षसान् ॥२७॥

नितः क्रव्यात् क्रव्यं मांसं अत्तीति राक्षसः दूषणेन बंधुना सहितः अतएव खरः विवेकशून्यः गर्दभ-तुल्यः ॥ खरस्याद्गर्दभे मूर्खे तीक्ष्णाग्र इति विश्वः । प्रतीकारेच्छया सहानीकःससैन्यः । वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियामित्यमरः ।। २९ ।। नानिति । राजीवलोचनः पद्मलोचनः । राजीवाख्यमृगे मत्स्ये पद्मरागोपजीविनीति विश्वः । रमानाथः तान् खरदूषणादीन् लीलयाऽनायासेन जघान । हनहिंसा-गत्योः लिट् । सुरकार्यप्रसाधनार्थं स्वप्रयोजनाभावेपि भक्तानुकंपयाऽसुरवधादिकं करोतीति भावः ।।३०।।

ध्वस्तकर्णां विघोणां च कारयामास राक्षसीं। लंकेशभगिनीं रामो लक्ष्मणेनानुजन्मना ॥ २८ ॥
रामविप्रकृतःक्रव्यात् प्रतीकमचिकीर्षया । आजगाम सहानीकःखरो दूषणसंयुतः ॥ २९ ॥
तान् जघान रमानाथो रामो राजीवलोचनः । लीलयैव परानंदः सुरकार्यप्रसिद्धये ॥ ३० ॥

स्वयमेकश्चतुर्दशसंख्याकान् खरादीन् लीलया कथं जघानेत्यत आह । राम इति । पुरस्तादग्रेभागे परतः पृष्ठभागेपि दिक्षु पूर्वादिचतसृषु विदिक्षु आग्नेयादिकोणेष्वपि इत्यमुना प्रकारेण । इति प्रकरणे हेतौ प्रकाशादिसमाप्तिषु । निदर्शने प्रकारे स्यादनुकर्षे च संमतमिति विश्वः । अनंतैरपरिछिन्नैः रामैः रामरूपैः

रामःपुरस्तात्परतोपि रामो रामःपरं दिक्षु विदिक्षु रामः । रामैरनंतैरिति विश्वरूपो निघ्नन्नरातीन्विरराज रामः ॥३१॥ इति श्रीभणिमंजर्यां प्रथमः सर्गः ॥ १ ॥

विश्वरूपः बहुरूपः । विश्वकृत्स्नमशेषं स्यात्समस्तं निखिलाखिलमित्यमरः। अरातीन् वैरिणः वैर्यरातिः सपत्नोरित्यमरः। निघ्नन्घातयन् विरराज अतीव शुशुभे लिट् ।। ३१।। इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुतनारायणपंडिताचार्यविरचितमणिमंजरीटीकायां गूढभावप्रकाशकायां प्रथमःसर्गःसमाप्तः ।।१ ।।
श्रीकृष्णार्पणमस्तु ।



। श्रीलक्ष्मीनृसिंहप्रसीद । चरित्रांतरकथां कथयितुमुपक्रमते । तत इति । ततः खरादिवधानंतरं सहलक्ष्मणे
रामे दूरंगते । सति स्याद्दूरं विप्रकृष्ठकमित्यमरः । स्वाश्रमादिति शेषः । रावणः तन्नामा राक्षसः मया इयं
प्रत्मक्षसिद्धा सीता रामपत्नी । सीता रामकलत्रे स्यात्तथा लांगलपद्धताविति विश्वः। नीयते अपनीयते । इति
इत्थं मत्वा विपरीतं ज्ञात्वा तदाकृतिं सीताप्रतिमां तदानीं सीतानिर्मितां इंद्राधिष्टितां सीताप्रतिबिंबां सीता-
रूपां । आकृतिः कथिता रूपे सामान्यवपुषोरपीति विश्वः। निन्ये नीप्रापणे लिट् ।स्वेनापह्रीयमाणायां सीता-
यां इयं सीतेति बभ्रामेति तात्पर्यं बोध्यम् ॥ १ ॥ उक्तभंग्या रावणेन सीता नापहृतेति सिद्धं । तदेव विवृ-

ततो दूरंगते रामे रावणःसहलक्ष्मणे। सीतेयं नीयत इति मत्वा निन्ये तदाकृतिं ॥ १ ॥

रामांतिके स्थिता देवी न मंदैः समदृश्यत। रूपांतरेण कैलासं गता नित्यावियोगिनी ॥ २ ॥

ण्वन्नाह । रामांतिक इति । रामस्यांतिके समीपे निकटाऽसन्नसन्निकृष्टसनीडवत् । उपकंठांतिकाभ्यर्णेत्यमरः ।
स्थिता सीता मंदैः खलैः मूर्खैर्वा । मंदःखले मंदरते मुर्खे चेति विश्वः । न समदृश्यत दृशिर् प्रेक्षणे लङ् ।
रूपांतरेण अन्यद्रूपं रूपांतरं । तेन सीता कैलासं गता बभूवेति शेषः । यतो नित्यावियोगिनी सर्वदा वियो-
गरहितेत्यर्थः ॥ २ ॥ अतो वियोगकातरो रामः । सीतान्वेषणादिकर्माकार्षीदित्येतदज्ञजनमोहनायैवेत्य-
भिप्रायादाह । नित्यमिति । रामो निजां स्वीयां देवीं सीतां नित्यं पश्यन् पूर्णसंतोषेण निरवधिकसुखेन
संभृतः पूर्णोपि देवी न दृश्यते न साक्षात्क्रियते इति हेतोः संकटवानिव दुःखीवाभूत् । यथा कश्चित्स्वप्रिया-

विरहेण संकटवान् भवति । तद्वदभूत् लङ् । अज्ञजनमोहनार्थमिति भावः ।। ३ ।। एतदनंतरभाविनीं कथां संगृण्हाति । प्रभंजन इति । श्रीमान् कांतिमान् प्रभजनसुतः प्रभंजनस्य वायोः सुतः निरंजनः अज्ञानादिदोषरहितः आंजनेयः अंजनासुतः हनुमान् भक्त्या संपूर्णः भरितः सन् । राजीववत् लोचने यस्य सः तं

**नित्यं पश्यन्निजां देवीं पूर्णसंतोषसंभृतः । रामो न दृश्यते सीतेत्यभूत्संकटवानिव ॥ ३ ॥**
**प्रभंजनसुतः श्रीमानांजनेयो निरंजनः । ननाम भक्तिसंपूर्णो रामं राजीवलोचनं ॥ ४ ॥**

रामं ननाम नमस्कृतवान् । णमुप्रव्हत्वे शब्दे इत्यस्माद्धातोः परस्मैपदं ।। ४ ।। स हनुमान् स्वामिन् न विद्यते दुःखं यस्यासौ निर्दुःखःतस्य संबुद्धि तथा । आनंदश्च लीलाच आनंदलीले उभेआत्मा शरीरं यस्यासौ तथा । तस्य संबुद्धिःतथा । हे राम तुभ्यं नमः अस्त्विति शेषः । त्वं दुष्टान् जहि हनहिंसागत्योर्लिट् । अथ निर्दुःखानंदलीलात्मन्नित्येकंपदं निर्दुःखश्चासौ आनंदश्च लीला च । शेषं पूर्ववत् । निजान् स्वभक्तानव अवरक्षणे लोट् । इति निजं स्वाभाविकं गुरुं रामं अस्तौत् । स्तुतिं चक्रे । ष्टुञ् स्तुतौ लङ् । अस्तौत् अस्तुतां अस्तुवन् ।। ५ ।। स रामः अन्यद्वनं वनांतरं आसाद्य प्राप्य सुग्रीवमैक्षत । ईक्षदर्शनांकनयोः लङात्मनेपदं । तेन सुग्रीवेण सख्यं समासाद्य सुग्रीवस्याग्रजं वालिनं निजघान । हनहिंसागत्योः ।। ६ ।। ततो राज्यप्राप्त्यनंतरं निपुणाःकुशलाः वीराः आरब्धांतगामिनः सुग्रीवेण संदिष्टाः आज्ञापिताः सीतामार्गणतत्पराः आदरवंतो वानराः सर्वशः दिक्षु प्रसस्रुः व्याप्नुवन् सृगतौ लिट् । ससार ससृतुःसस्रुः ।। ७ ।। हनुमान्

दक्षिणां ककुभं दक्षिणदिशं गत्वा प्राप्य अंभसां निधिं समुद्रं अतिलंध्य अतिक्रम्य ततो लंकां । सीताकृति सीताया:आकृतिं प्रतिमां अवैक्षत । अशोकवनिकायामिति शेषः। ऐंक्षत ऐक्षतां ऐक्षंत लड.ात्मनेपदं ॥ ८ ॥

रामस्वामिन्नमस्तुभ्यं दुष्टान् जहि निजानव। निर्दुःखानंदलोलात्मन्नित्यस्तौत्सनिजं गुरुं ॥ ५ ॥
स वनांतरमासाद्य रामःसुग्रीवमैक्षत। तेन सख्यं समासाद्य निजघान तदग्रजं ॥ ६ ॥
ततः सुग्रीवसंदिष्टा वानरा दिक्षु सर्वशः। प्रसस्रुःनिपुणा वीराः सीतामार्गणतत्पराः ॥ ७ ॥
दक्षिणां ककुभं गत्वा हनुमानंभसां निधिं । अतिलंध्य ततो लंकां सीताकृतिमवैक्षत ॥ ८ ॥

असौ हनुमान् देव्यै सीतायै रामस्यांगुलीयकं मुद्रिकां दत्वा ततः देव्याः सकाशात् चूडामणिं शिरोरत्नं संगृह्य भक्त्या जानकीं नत्वा तरुं वृक्षं आरुहत् आरूरोह ॥९॥ मरुतस्यापत्यंपुमान् मारुतिः हनुमानुच्चैरत्यतं वनं अशोकनामकं विशकलय्य उन्मूल्य । अक्षपूर्वकान् अक्षः पूर्वो येषां ते तान् राक्षसान्निहत्य पुच्छाग्निना लंकां-अदहत् । भस्मीचकार दहभस्मीकरणे लङ्. ॥ १० ॥ धन्यःसुकृतशाली सःहनुमान् ततः अनंतरं रत्नाकरं समुद्रं तीर्त्वा वानरेंद्रैःसभाजितःसन् रामं प्राप्य । रामाय चूडामणिं दत्वा अनमत् । ननाम णमु प्रव्हत्वेशब्दे लङ्. ॥ ११ ॥ स रामः धीमता हनुमता लक्ष्मणेन च ससैन्येन सुग्रीवेण च सार्धं साकं कीनाशस्य यमस्य हरितं दिशं दक्षिणां ययौ ॥ १२ ॥ स रामःदक्षिणांभोधौ दक्षिणसमुद्रे मर्कटैः वानरैः सेतुं बंधयामास । तेन वर्त्मना सेतुना ससैन्यः सन् नक्तंचरस्य रावणस्य पुरं लंकां प्रति ययौ ॥१३॥ सलक्ष्मणा वानराःसुग्री-

रामांगुलीयकं देव्यै दत्वा चूडामणिं तथा । सङ्गृह्य जानकीं भक्त्या नत्वा सावारुहत्तरुम् ॥९॥
वनं विशकलय्योच्चैःराक्षसानक्षपूर्वकान् । निहत्य मारुतिर्लङ्कामदहत्पुच्छवन्हिना ॥ १० ॥
ततो रत्नाकरं तीर्त्वा वानरेंद्रैः सभाजितः । दत्वा चूडामणिं धन्यःप्राप्य रामाय सोऽनमत् ॥ ११ ॥
रामो हनुमता सार्धं लक्ष्मणेन च धीमता । सुग्रीवेण ससैन्येन कीनाशहरितं ययौ ॥ १२ ॥
स सेतुं दक्षिणांभोधौ बंधयामास मर्कटैः । ससैन्यो वर्त्मना तेन नक्तञ्चरपुरं ययौ ॥ १३ ॥

वादयः राक्षसानीकं रावणसैन्यं निजघ्नुः । संजन्हुरितिशेषः । हनुमान् भगवतः रामस्य प्रीत्यै अतिबलान् अत्यंतबलिष्ठान् रिपून्निकुंभादीन् जघान ॥ १४॥ स महारक्षसा इंद्रजिता मोहितान् मूर्छां प्रापितान् नागपाशैरिति शेषः । सर्ववानरान् सुग्रीवादिसमस्तकपीन् गंधमादनं तन्नामकपर्वतं आनीय तद्गतानां गंध मादने स्थितानामौषधीनां मृतसंजीविन्यादीनां । वायुना तद्गंधहारिणा मरुता अजीवयत् । उज्जीवयामास ॥१५।

निजघ्नु राक्षसानीकं वानराःसहलक्ष्मणाः । हनुमान् भगवत्प्रीत्यै जघानातिबलान् रिपून् ॥ १४ ॥
सोऽजीवयन्महारक्षोमोहितान् सर्ववानरान् । गंधमादनमानीय तद्गतौषधिवायुना ॥ १५ ॥
असंख्यान् राक्षसान् हत्वा कुंभकर्णं च रावणम् । रामो विभीषणं रक्षःसाम्राज्ये सोऽभ्यचीक्लृपत् ॥१६॥
अशोकमूलमासाद्य दर्शयामास जानकीम् । नित्यावियोगिनीं देवीं रामो मंददृशामपि ॥ १७ ॥
स रामः असंख्यान् संख्यारहितान् राक्षसान् कुंभकर्णं रावणं च हत्वा रक्षःसाम्राज्ये विभीषणमभ्यचीक्लृपत् ।

राक्षसाधिपत्यं ददावित्यर्थः । क्लृपूसामर्थ्ये अस्माण्यंतात्कर्त्तरि लुङ् ।। १६ ।। स रामः । अशोकस्य वृक्षस्य मूलमासाद्य प्राप्य नित्यावियोगिनीं स्वसमीपमित्यर्थः । जानकीं सीतां मंददृशामल्पज्ञानिनामपि दर्शयामास ।।१७।। पुरुषोत्तमः रामः हनुमत्प्रमुखैः हनुमदादिकपिवरैः देव्या सीतया च साकं विमानमारुह्य निजां नगरीं

हनुमत्प्रमुखैःसार्धं देव्या च पुरुषोत्तमः। आरुह्य पुष्पकं रामो जगाम नगरीं निजाम् ॥ १८ ॥
भरतो भक्तिभारितो राममभ्येत्य निर्वृतः। पपात पादयोस्तस्य कृष्णस्येव श्वफल्कजः ॥ १९ ॥
तमुत्थाप्य परिष्वज्य राघवोंतःपुरं गतः । स पूजितो जनैःसर्वैर्जननीमभ्यवंदत ॥ २० ॥

अयोध्यां जगाम ।१८। भक्तिभरितःपूर्णः भरतः राममभ्येत्य प्राप्य निर्वृतः सुखपूर्णः सन् श्वफल्कजोऽक्रूरः कृष्णस्य पादयोरिव तस्य रामस्य पादयोः पपात । साष्ठांगप्रणमं चकारेत्यर्थः ।। १९ ।। राघवो रामः । भरतं उत्थाप्य उद्धृत्य परिष्वज्य अंतःपुरं प्रति गतः तत्रत्यैः सर्वजनैः पूजितः सन् जननीं कौसल्यां अभ्यवंदत ननामेत्यर्थः । अभ्यवंदत अक्षयवन्देतां अभ्यवंदंत । लङात्मनेपदं ।। २० ।। प्रभुः समर्थः अतएव पूर्णः स रामः राज्ये राज्यपालनार्थमभिषिक्तः जगतीं भूमिं शशास पालयामास। जगतीरत्नगर्भा चेति भूमिपर्यायेत्य-

रामो राज्यभिषिक्तःसन् शशास जगतीं प्रभुः। धर्मानशिक्षयत्पूर्णो बुभुजे संपदःसुखी ॥ २१ ॥
सनकादींश्च तद्वंश्यान् मुनीनन्यांश्च मारुतिः । रामांतिके श्रुतिव्याख्याविशेषान् समशिक्षयत् ॥ २२ ॥

म.म. ९

सर्गः ९

मरः । धर्मान् वर्णाश्रमोचितान् अशिक्षयत् । कर्त्तव्यतया शिक्षिते यस्मात्सुखी सुखपूर्णोपि संपदः । धनधा-न्यादिसमृद्धीः बुभुजे अनुबभूव ।।२१।। मारुतिः हनुमान् रामांतिके सनकादीन् मुनीन् तद्वंश्यान् तेषां सनका-दीनां वंशे भवान् । अन्यान्मुनींश्च श्रुतिव्याख्याविशेषान् वेदव्याख्यानप्रकारान् समशिक्षयत् । सम्यक् शिक्षि-तवान् ।।२२।। स रामः सुराणकान् तन्नामकासुरान् तमो नेतुं प्रापयितुं जानकीं सीतां तत्याजेव । न वस्तुतः

सुराणकांस्तमो नेतुं तत्याजेव स जानकीं । व्याप्तत्वान्निरवद्यत्वात्तस्यास्त्यागः कथं भवेत् ॥ २३ ॥
स्वात्मानं यज्ञपुरुषं यज्ञेनायजताथ सः । तत्रागता सती सीतावेद्यामन्तर्दधे किल ॥ २४ ॥
धर्मं सांख्यं च योगं च वर्तयामास राघवः । प्रावोचन्मरुतःसूनुःसंपदो ननृतुस्तदा ॥ २५ ॥
प्रकृत्या परमा हंसा ब्रह्मणो मानसाःसुताः । सनकाद्यास्ततःश्रुत्यव्याचख्युस्तत्वमंजसा ॥ २६ ॥

तत्परित्यागं चकारेत्यर्थः । तदेव विशदयति । व्याप्तत्वादिति । परममहत्परिमाणत्वात् निरवद्यत्वात् दोष-रहितत्वाच्च । तस्याःसीतायाः त्यागो वर्जनं कथंभवेत् न कथमपीत्यर्थः ।।२३।। अथ सीतापरित्यागानंतरं स रामो यज्ञपुरुषं यज्ञभोक्तारं स्वात्मानं यज्ञेनाश्वमेधेन अयजत ईजे । सती पतिव्रता सीता तत्र यज्ञसमये आगता सती वाल्मीक्याश्रमादिति शेषः । वेद्यां यज्ञवेदिकायां अंतर्दधे अंतर्हिता जानकीनेत्येव । रामां-तिकमेवस्थिताभूदिति भावः । ।। २४ ।। राघवः धर्मं धर्मलक्षणं योगमुपायं सांख्यं ज्ञानलक्षणं योगं च प्रवर्तितवान् । मरुतःवायोःसूनुः वर्तयामास हनुमान् प्रावोचत् प्रवचनमकरोत् । किंपुरुषखंडे मूलरामायणा-दिव्याख्यानं चकारेत्यर्थः । तदा तु संपदो ननृतुः । संपदभिवृद्धिरभूदिति भावः ।। २५ ।। प्रकृत्या स्वभा-

वेन परमहंसाः स्वरूपतः संन्यासिन इत्यर्थः । ब्रम्हणश्चतुर्मुखस्य मानसाःमनसो जाताः सुताः सनकाद्याः मुनयःततो हनुमतः सकाशात् श्रुत्वा मूलरामायणादिव्याख्यानश्रवणं कृत्वेत्यर्थः । तत्वं परापरतत्वं अंजसा सम्यक्व्याचख्युः । व्याख्यातवंतः वि आङ् पूर्वात् ख्याप्र- कथन इत्यतो लिट् ॥ २६ ॥ रामाय अभिरामाय

नमो रामाय रामाय राम राम नमोऽस्तु ते । रामःस्वामी गती राम इति लोका विचुक्रुशुः ॥ १७ ॥
देवो जिगिमिषुर्धाम स्वीयमभ्यार्थितःसुरैः । दुग्धाब्धिं प्रययौ शेषो लक्ष्मणो रामचोदितः ॥ १८ ॥

रामाय नमः । अभिराम हे राम तुभ्यं नमोऽस्तु । स्वामी पालकः रामः गतिःप्राप्य इति अनेन प्रकारेण लोका जनाःविचुक्रुशुः। उद्घोषं कृतवंतः ॥ २७ ॥ स्वयमेव स्वीयं धाम वैकुंठं जिगमिषुःगंतुमिच्छुः देवो रामःसुरैर्देवैः अभ्यर्थितःप्रार्थितोऽभूत् स्वधामगमनायेति शेषः । लक्ष्मणो रामचोदितः गच्छेत्युक्तः शेषो भूत्वा दुग्धाब्धिं प्रययौ ॥ २८ ॥ येये वीप्साहिभावः मोक्षपदेच्छवः मुक्तिस्थानं जिगमिषवः ते सर्वे यूयं

समायत समायत ये ये मोक्षपदेच्छवः । एमाघोषयद्रामो दूतैर्दिक्षु समस्तशः ॥ १९ ॥
अथोत्तरां दिशं देवः प्रतस्थे सह सीतया । वानराद्यैर्नराद्यैरप्यशेषैर्जंतुभिर्वृतः ॥ ३० ॥

समायात समायात समागच्छत । आदराद्विरुक्तिः । भृत्यैः स रामः दूतैःएवं अनेन प्रकारेण समस्तशः सर्वासु दिक्षु अघोषयत् आघोषणं कारयामास ॥२९॥ अथ आघोषणानंतरं देवःरामः सीतया सर्वजनदृष्टि-

तेषां मोक्षपदं दत्वाऽभ्यनुज्ञाप्य मरुत्सुतं। राघवः सीतया सार्धं विवेश स्वं परं पदं ॥ ३१ ॥
सत्येन भक्त्या च विरक्तिमत्या मत्या च धृत्या च तपस्यया च। हा रामरामेति सदोपगायन्
प्राभंजनिःकिं पुरुषेषु रेमे ॥ ३२ ॥ इति श्रीमणिमञ्जर्यां द्वितीयः सर्गः ॥ २ ॥

विषयतां प्राप्नयेति शेषः । वानराद्यैःअत्राद्यशब्देन राक्षसानां ग्रहणं । नराद्यैःअन्यैर्जंतुभिः प्रणिभिरपि खगमृगादिभिरावृतः परिवृत स्वपुरादुत्तरां दिशं प्रतस्थे । प्रस्थापनमकरोत् ।।३०।। राघवःतेषां स्वेन सहागतानां नरादीनां मोक्षपदं दत्वा मरुत्सुतं हनुमंतं अभ्यनुज्ञाप्य किंपुरुषादिस्थानानि गंतुमितिशेषः । सीतयासार्धं स्वंपरं पदं वैकुंठं विवेश ।। ३१।। सत्येन सन्निष्ठया । विरक्तिमत्या वैराग्यसहितया । भक्त्या च मत्या मननेन च धृत्या । धैर्येण च तपस्यया तपश्चरणे न च उपलक्षितः । प्राभंजनिः प्रभंजनस्याऽपत्यं हनुमान् हेत्यास्वादने । रामरामेति सदोपगायन् किंपुरुषेषु रेमे । प्रदेशबहुत्वाद्बहुवचनं ।। ३२ ।। इति श्री मत्कविकुलतिलकत्रिविक्रमपंडिताचार्य सुतनारायणपंडिताचार्यविरचितमणिमंजरीटीकायां द्वितीयःसर्गः समाप्तः ।। २ ।। श्रीकृष्णार्पणमस्तु ।



श्रीलक्ष्मीनृसिंहप्रसीद । एवं रामकथां संगृह्येदानीं कृष्णकथां सर्गद्वयेन, संगृण्हाति । हिमांशोरित्यादिना । अत्रिब्रह्मण:पुत्र:अभवत् । हिमांशुस्तत्सुत:अभवत् । इत्यादौ पूरणीयं ।.अत्रिस्तु ब्रह्मण: पुत्र: शशांकस्तत्सुत स्मृत इत्युक्ते: । अत्रिपुत्रस्यात्रिनेत्रोद्भूतत्वेनात्रिपुत्रस्य हिमांशो:चंद्रस्य । हिमांशुश्चंद्र माश्चंद्र इत्यमर: ।

हिमांशोरत्रिपुत्रस्य बुधो नाम सुतोऽभवत् । पुरूरवा महाराजस्तस्य पुत्रो व्यजायत ॥ १ ॥
तस्यायुरभवत्पुत्रो नहुषस्तस्य नंदनः । ययातिरभवत्तस्य नंदनो बलवीर्यवान् ॥ २ ॥

बुधो नामेति प्रसिद्धः सुत:अभवत् तस्य बुधस्य पुरुरवाः सकारांतोयं । पुरूरवाख्यो महाराज:चक्रवर्ती पुत्र: व्यजायत ।१।। तस्येति ॥ तस्य पुरूरवस: आयु: आयु नामक: पुत्र अभवत् । तस्य अयो: नहुष नंदन:सुत:पुत्र: अभवत् । तस्य नहुषस्य ययाति: नंदन अभवत् । कथंभूत: बलवीर्यवान् बलं च वीर्यं च बलवीर्ये । बलवीर्ये यस्य स्त इत्यर्थ: ।। २ ॥ देवयानीमिति । स:ययाति: देवयानीं शर्मिष्ठां चेति उभे प्रिये भार्ये उवाह उपयेमे

देवायानीं च शर्मिष्ठां स उवाह प्रिये उभे । प्रथमोशनसः पुत्री द्वितीया वृषपर्वणः ॥३ ॥
यदुं च तुर्वसुं राजा देवायान्यामजीजनत् । द्रुह्युं चानुं च पूरुं च शर्मिष्ठायामजीजनत् ॥ ४ ॥

वहप्रापणइत्यस्माद्धातो:कर्तरि लिट् परस्मैदं । प्रथमा आद्या देवयानी उशनश: शुक्रस्य पुत्री । उशना भार्गव: कविरित्यमर: । द्वितीया शर्मिष्टा वृषपर्वणस्तन्नामराज्ञ:पुत्रीति संबंध: ।। ३ ।। यदुं चेति । राजा ययाति:

म.भ. २१

भाग: ३

यदुं च तुर्वसुं चेति द्वावेव। देवयान्यां अजीजनत्। जनयामास जनिप्रादुर्भावे इत्यस्माद्धातोःकर्तरि लिट् परस्मैपदं। द्रुह्युं चानुं च पूरुंचेति त्रीन् पुत्रान् शर्मिष्ठायां अजीजनत् ॥ ४ ॥ यदोरिति । कार्तवीर्य-

यदोर्वंशे तु राजानःकर्तवीर्यपुरोगमाः। बभूवुर्भगवद्भक्तास्तपोज्ञानपरायणाः ॥ ५ ॥

पुरोगमाः कृतवीर्यसुतः कार्तवीर्यार्जुनः पुरोगमःपुरःसरो येषां ते तथोक्ताः राजानः चक्रवर्तिनः यदोर्वंशे बभूवुः। भूसत्तायां लिट् परस्मैपदं । प्रथमपुरुषबहुवचनांतः कीदृशाः भगवतः नारायणस्य भक्तः तपोज्ञानपरायणाः

पुरोर्वंशे तु राजान आसन् दौष्यंतिपूर्वकाः। तेषां कीर्त्या च विक्रांत्या समस्ताःपूरीता दिशः ॥ ६ ॥
भूभारहरहणापेक्षा तस्मिन्काले दिवौकसः। दुग्धाब्धिशायिनं विणुं शरण्यं शरणं ययुः ॥ ७ ॥

तपसि ज्ञाने च परायणाः आसक्ताः ॥ ५ ॥ पुरोरिति । दौष्यंतिपूर्वकाःदुष्यंतपुत्रो भरतः दौष्यंतिःस एव पूर्वो यषां ते तथोक्ताः। राजानः पुरोर्वंशे पुरुनामकराज्ञो वंशे आसन् बभूवुः । बभूव बभूवतुः बभूवुः। असभुवि इत्यस्माद्धातोः कर्तरि लिट् परस्मैपदं। प्रथमाबहुवचनांतः। तेषां दौष्यंतिभरतादीनां कीर्त्या विक्रां-त्या पराक्रमेण वा समस्तादिशः पूरिताः पूर्णाः बभूवुः ॥ ६ ॥ भूभारेति । दिवौकसःदेवाः तस्मिन् काले भूभारहरणापेक्षा भुवः भाराः भूभाराः भूभाराणां हरणं भूभारहरणं अपेक्षंत इति भूभारहरणापेक्षाः भूभारभूताः यो दैत्याः कंसादयः तेषां हरणं संहरणं अपेक्षंत इति ते चोक्ताः। संतःशरण्यं

दुग्धाब्धिशायिनं दुग्धाब्धौ शेत इति दुग्धाब्धिशायिनं विष्णुं शरणं ययुः । याप्रापण इत्यस्माद्धातोःकर्तरि लिट् ॥ ७ ॥ विप्रेति ॥ समस्तशःसर्वे विप्रक्षत्रादिभावेन विप्रक्षत्रवैश्यशूद्रादिरूपेण बभूवुः जाताः। द्रोणादयो विप्राः । युधिष्ठिरादयःक्षत्रियाः । नंदादयो वैश्या । सुरादयः आदिशब्देनगंधर्वादीनां ग्रहणं । ते आदिष्टाः

विप्रक्षत्रादिभावेन तआदिष्टाःसुरादयः । बभूवुर्भगवत्सेवां विधित्संतःसमस्तशः ॥ ८ ॥
वरुणः शंतनुर्नाम पुरोर्वंशे व्यजायत । विचित्रवीर्यस्तस्यासीत्पुत्रश्चित्रांगदानुजः ॥ ९ ॥

विदुरादयःशूद्रा । संजयाद्याःसूत इति ज्ञातव्यं । कथंभूताः भगवत्सेवां विधित्संतः कर्तुकामाःसंतः ॥ ८ ॥ एतदेवविवृणोति । वरुण इत्यादिना । वरुणःशंततुर्नाम प्रसिद्धःसन् पुरोर्वंशे व्यजायत । तस्य शंतनोःचित्रांगदानुज विचित्रवीर्यनामकःपुत्रःआसीत् । अनेन शंतनो सकशात् सत्यवत्यांद्वौ सुताविति उक्तंभवति ॥९॥

धृतराष्ट्रश्चपांडुश्च इतिपुत्रौबभूवतुः। पांडोः कुंतीचमाद्रीचद्वे भार्येधर्मकोविदे ॥ १० ॥
सपांडुर्मुनिशापेन स्त्रीसंगमसुखंजहौ । भर्त्राज्ञयासुतंकुंती धर्माल्लेभेयुधिष्टिरं ॥ ११ ॥

धृतराष्ट्रःपांडुश्चेति द्वौपुत्रौ बभूवतुः । पांडोःकुंती च माद्री चेति द्वे भार्येगभूवतुरितिसंबंधः । कथंभूतेधर्मकोविदे । कुशलेलिट् ॥ १० ॥ सपांडुः मुनिशापेनमुनेः शापेन स्त्रीसंगमसुखं । स्त्रीसंगमजन्यंयत्सुखं तज्जहौ तत्याज । कुंतीभर्त्राज्ञयाकुंतोभर्तुःपांडोः आज्ञया । धर्मात्युधिष्ठिरं तंनामकंसुतंलेभेलिट् । धर्मः पुण्येयमेन्यायेइतिविश्चः ॥ ११ ॥ धृतराष्ट्रइति । धृतराष्ट्रस्यसंकाशात् । गांधार्यातन्नामिकायां भार्यायांपुत्राः

धृतराष्ट्रस्य गांधार्यामासन् दुर्योधनादयः। वधाय मारुतस्तेषां भीमं कुंत्यामजीजनत् ॥ १२ ॥
सा लेभे वासवाज्जिष्णुं यमौ माद्री च दस्रयोः। वने वर्धंत वत्सास्ते पांडुना परिरक्षिताः ॥ १३ ॥

सुताः आसन् । मारुतः वायुः दुर्योधनादीनां वधाय हत्यै कुंत्यां भीमंतन्नामकं पुत्रं अजीजनत् । जनीप्रादुर्भावे लिट् ॥१२॥ सेति । कुंती वासवात् इंद्रात् जिष्णुं अर्जुनंलेभे प्राप जिष्णुर्जय इतिविश्वः । माद्री दस्रयोः अश्विनोः सकाशात् यमौयमलौ नकुलसहदेवौलेभे । ते वत्साःपुत्राः। वत्सस्तर्णकपुत्रादाविति विश्वः । कीदृशाः- पांडुना परिरक्षिताः संरक्षिताः संतः वनेअवर्धन्त ॥१३॥ एवमिति । महाबलाः। महत्बलं येषां ते तथोक्ताः। पांचालबाल्हीकाः पांचालाश्चबाल्हीकाश्च पांचालबाल्हीकाः । पांचालदेशस्थाः शिखंडचादयः । बाल्हीक- देशस्थाःसोमदत्तादयः । एवं अनेनप्रकारेण अवर्धंत । पूर्वं पूरोर्वंशमभिधायेदानीं यदुवंशं कथयति । आहुकादि-

एवं पांचालबाल्हीका अवर्धंत महाबलाः । आहूकाद्यादवादुग्रसेनोऽभूद्देवकस्तथा ॥ १४ ॥
देवकस्य सुता जज्ञे देवकी देवसंमता। वसुदेव उवाहैनां यादवःशूरनंदनः ॥ १५ ॥

ति । यादवात् यदुकुलोत्पन्नात् आहूकात्तन्नामकात् । उग्रसेनः तथा - देवकश्च अभूत् ॥ १४ ॥ देवकस्य देवकी तन्नामिका सुता जज्ञे जाता । कथंभूता देवसंमता देवस्य हरेः संमता हरिभक्तेत्यर्थः । वसुदेवःएनां देवकीं उवाह । कथंभूतः यदोर्गोत्रोत्पन्नः पुमान् यादवः शूरस्य नंदनः पुत्रः ॥ १५ ॥ तत्रेति । परमात्मा तत्र देवक्यां प्रादुरभूत् प्रकटोऽभूत् । कथंभूतःपरमात्मादेवःक्रीडादिगुणविशिष्टः सनातनःशश्वदेकप्रकारः दंप-

तत्र प्रादुरभूद्देवःपरमात्मा सनातनः । दंपत्योरनयोराशाःपूरयन् सुरकार्यवान् ॥ १६ ॥
वसुदेवस्य रोहिण्यां ततःपूर्वमजायत । अनंतो बलवत्वेन बलभद्र इति श्रुतः ॥ १७ ॥

त्योः जाया च पतिश्च दंपती । तयोर्दंपत्योःअनयोर्देवकीवसुदेवयोःआशाः अभिलाषाः अभीष्टानि पूरयन्नित्यर्थः । सुरकार्यवान् भूभारहरणरूपदेवकार्यवान् ॥१६॥ वसुदेवस्येति । अनंतःशेषः ॥ अनंतःशेषविष्णुस्यादिति विश्वः । ततः कृष्णात्पूर्वं वसुदेवस्य सकाशात् रोहिण्यां अजायत । कथंभूतः । अनंतः । बलवत्वेन । बलमस्यास्तीति बलवान् तस्य भावः बलवत्वं । तेन बलवत्वरूपप्रवृत्तिनिमित्तेन । बलभद्र इतीरितःख्यातः । बलभद्रः मंगलरूप इति निरुक्तिरनेन सूचिता ॥ १७ ॥ ज्ञानेति । आनकदुंदुभिः वसुदेवःहरिं कृष्णं दृष्ट्वा

ज्ञानानंदतनुं श्यामं शंखचक्रगदाधरं । व्यक्तमात्रं हरिं दृष्ट्वा तुष्टावानकदुंदुभिः ॥ १८ ॥
स्वाज्ञया स व्रजं नीतःकंसाद्भीतेन शौरिणा । शिशुरूपो यशोदायाः शायितः शयने शनैः ॥ १९ ॥

तुष्टावअस्तौषीत् । ष्टुञ् स्तुतौ लिट् । कथंभूतं ज्ञानानन्दतनुं । ज्ञानानंदावेव तनुर्यस्यस तथोक्तस्तं श्यामं इंद्रनीलवत् श्यामवर्णं शंखचक्रगदाधरं उपलक्षणमेतत् शंखचक्रगदापद्मं अनेन कृष्णस्य चतुर्भुजत्वं ज्ञायते । तदुक्तं भागवते । उपसंहर विश्वात्मन्नदोरूपमलौकिकम् । शंखचक्रगदापद्मं श्रियाजुष्टं चतुर्भुजमिति । पुनः कीदृशं व्यक्तमात्रं केवलमभिव्यक्तं व्यक्तमात्रं न तु लोकवदुत्पन्नमित्यर्थः । ज्ञानानंदतनुं पद्मशंखेति पाठे चत्वार्यायुधानीति स्पष्टं ॥ १८ ॥ स्वाज्ञयेति। शौरिणा वसुदेवेन शिशुरूपःबालरूपःबभूव । कृष्णःयशोदयाःशयने शय्यायां शनैःशायितःशयनंप्रापितः । शयनं शयने निद्रा शय्ययोरपि भाषितमिति विश्वः ।

कथंभूतेन कंसाद्भीतेन कथंभूतःसः स्वस्यात्मनःआज्ञया व्रजं प्रति गोकुलं प्रति शौरिणा वसुदेवेन नीतः ॥ १९ ॥ चंडिकामिति । यादवनंदनः यादवस्य शूरस्य नंदनः पुत्रःवसुदेवः तत्क्षणोद्भूतां स चासौ क्षणश्च

चंडिकां तत्क्षणोद्भूतां नीत्वा यादवनंदनः। देवक्याःशयने न्यस्य पूर्ववद्बंधमाययौ ॥ २० ॥

तां कन्यां कंसआनीय निहंतुमुपचक्रमे। मृत्युस्ते जात इत्युक्त्वा सोत्पपात नभस्थलं ॥ २१ ॥

तत्क्षणः तस्मिन्नुद्भूतां तत्कालएवावतीर्णां चंडिकां दुर्गां मथुरां प्रतीति शेषः। मृडानी चंडिकांबिकेत्यमरः। देवक्याः शयने शय्यायां न्यस्य विधाय पूर्ववद्बंधं शृंखलाबंधं आययौ ॥२०॥ तां कन्यामिति । कंसःतां कन्यां दुर्गामानीय बहिरानीय निहंतुं उपचक्रमे । उद्योगं कृतवान् । क्रमुपादविक्षेपे लिट् । सा दुर्गा ते तव मृत्युः मारको जात इत्युक्त्वा कंसहस्तादुन्मुच्येति शेषः । नभःस्थलं प्रति आकाशं प्रति-उत्पपात उत्पपत्य गता

जातमात्रान्कुमारान्स निहंतुं जनमादिशत् । हिंसाविहारा दुष्टास्ते निजघ्नुर्बालकान्भुवि ॥ २२ ॥

पतल् पतने लिट् ॥२१॥ जातमात्रामिति । सःकंसःजातमात्रान् तत्काल एवोत्पन्नान् अथवा जातमात्रान् सर्वान् जातानित्यर्थः । मात्रं कात्स्न्र्येऽवधारण इत्यभिधानं । कुमारान् बालान् निहंतुं भृत्यवर्गं आदिशत् । हिंसाविहाराः हिंसा बालहत्या विहारः क्रीडनं येषां ते तथा । अतिदुष्टाःजनाःभुवि बालकान् निजघ्नुः ।

जगाम गोकुलं दुष्टा धात्री कंसस्य पूतना। कृष्णमादत्त सा हंतुं तां जघान रमापतिः ॥२३॥
शायितः शकटस्याधः शकटाक्षं जघान सः। अमीमरत्तृणावर्तं तेनोन्नीतःस लीलया ॥ २४ ॥

हनहिंसागत्योर्लिट् ॥ २२ ॥ जगामेति कंसस्य धात्रीं स्तनपायिनी दुष्टा पूतना गोकुलं प्रति जगाम। धात्री स्यादुपमाता च धात्री स्यात्स्यात्स्तनपायिनी। धात्री जनन्यामलकीत्यमरः। सा हंतुं कृष्णं आदत्त अग्रहीत्। ग्रहउपादने इत्यतोर्लुङ्। रमापतिःरमायाःपतिःश्रीकृष्णःतां पूतनां जघान ॥२३॥ शायित इति। सःकृष्णःशकटाक्षं तन्नामकं जघान। कथंभूतःशकटस्यानसःअधः आतपपरिहार्थमिति शेषः। शायितःशयनं प्रतिप्रापितःस कृष्णः तृणावर्तं लीलया अमीमरत्। स्वार्थे णिच् मारयामास। मृञ् मरणे इत्यतोर्लुङ्। सःतेन तृणावर्तेन उन्नीतः ऊर्ध्वं नीतः ॥ २४ ॥ गर्गइति। अथ तृणावर्तवधानंतरं गर्गःगर्गाचार्यः शौरिणा वसुदेवेन आदिष्ट सन् व्रजं प्रति गोकुलं प्रति गतःसन् सबलस्य बलरामसहितस्यामुष्य कृष्णस्य क्षत्रियोचि-

गर्गोऽथ शौरिणाऽदिष्टश्चकार क्षत्रियोचितान्। संस्कारान्नाम चामुष्य स बलस्य व्रजं गतः ॥ २५ ॥

तान् जातकर्मादिसंस्कारान् नाम च नामकरणं चकार ॥ २५ ॥ प्रांगणेति। सःमाधवःकृष्णःअर्भकैःसह प्रांगणे अजिरे। अजिरंप्रांगणे चेति विश्वः रिंखणं पाणियुतजानुभ्यां भूमौ संचारं कुर्वन्। जानुभ्यामथ-पाणिभ्यां रिंखमाणौ विचेरतुः इत्युक्तेः। भावगर्भाभिः गर्भीकृताभिप्रायाभिः लीलाभिःक्रीडाभिः स्वकीयं

प्रांगणे रिंखणं कुर्वन् अर्भकैःसह माधवः। लीलाभिर्भावगर्भाभिर्जनमानंदयन्बभौ ॥ २६ ॥

जनं आनंदयन् बभौ। यथा उलूखलाकर्षणरूपा लीला स्वभक्तजननलकूबरमणिग्रीवयोः शापादिमोचनार्थं। तथा सर्वाः अपि लीलाः सार्थका एवेति भागवर्भाभिरित्यस्याभिप्रायः ॥ २६ ॥ जघासेति। देवःक्रीडा-

जघास मृत्तिकां देवःकदाचिल्लीलया हरिः। मात्रोपाल्लब्ध आस्ये स्वे व्यात्ते विश्वमदर्शयत् ॥२७॥
दध्यमत्रं विभज्येशःकदाचिच्चंद्रसन्निभं। नवनीतं समादाय रहो गत्वा जघास च ॥ २८ ॥

दिगुणविशिष्टः श्रीकृष्णः कदाचित् लीलया मृत्तिकां जघास। भक्षयामासेत्यर्थः अदभक्षणे इत्यस्माद्धातोः कर्तरि लिट्। हरिः श्रीकृष्णः मात्रा यशोदया उपालब्धः भर्त्सितःसन् व्यात्ते विकृते स्वे स्वकीये। आस्ये वदने इति विश्वः। सर्वं जगददर्शयत् दर्शयामास ॥ २७ ॥ दध्यमत्रमिति। ईशः श्रीकृष्णःकदाचित् दध्यमत्रं दध्नः अमत्रपात्रं। पात्रामत्रे च भाजनमित्यमरः। विभज्यपाषाणप्रक्षेपेण विभिद्य चंद्रसंन्निभं चंद्रसमानं अत्यंतशुभ्रमित्यर्थः। नवनीतं ह्य्यंगवीनं आदाय रहःरहसि जघास ॥ २८ ॥ जनन्येति। सःश्रीष्णः मात्रा

जनन्योलूखले बद्धःसोर्जुनावुदमूलयत्। नलकूबरमणिग्रीवौ मोचयामास शापतः ॥ २९ ॥

जनन्या यशोदया उलूखले बद्धःसन् अर्जुनौ तन्नामकवृक्षविशेषः। उदमूलयत् उत्पाटितवान्। सःनलकूबर-मणिग्रीवौ तन्नामकौ धनदात्मजौ शापतःनारदस्य शापात् मोचयामास। मोचयित्वा शापत इति पाठे

वृंदावनमियासुःसन् नंदसूनुर्बृहद्वने । ससर्ज रोमकूपेभ्यो वृकान् व्याघ्रसमान्बले ॥
तत्रोत्पातभिया गोपा आपुर्वृंदावनं वनं ॥ ३० ॥

शापतः मोचयित्वा निजां स्वकीयां तनुं प्रापयामासेति शेषः ॥२९॥ वृंदवनमिति । नंदसूनुः नंदकुमारःकृष्णः वृंदावनंनं प्रति यियासुः यातुमिच्छन् सन् बृहद्वने गोकुले रोमकूपेभ्यः वृकान् ससर्ज सृष्टवान् कथंभूतान् बले व्याघ्रसमान् । तत्रेति । गोपाःतत्र गोकुले उत्पातानां वृकाद्युत्पातानां भिया भयेन । भीतिर्भीःसाध्वसं भयमित्यमरः । वृंदावनं तन्नामकं वनं ययुः ॥३० ॥ स पालयन्निति । आदिदेवः आदिदेवता स कृष्णःवृंदावनमिति शेषः । गोपकबालवृंदैः गोपकानां गोपालनां बालाः बालकाःतेषां वृंदैः समूहैःबलेन च बलरामेण साकं सह पशुवत्सयूथान् पशवःगावःतेषां वत्साःतेषां यूथान् पालयन् वत्सासुरं निहत्य बकं च बकासुरं च निहत्य

म. मं. ८५

स पालयन् गोपकबालवृंदैर्बलेन साकं पशुवत्सयूथान् । निहत्य वत्सासुरमादिदेवो बकंच गोपालकतामवाप ॥ ३१ ॥ इति श्रीमणिमञ्जर्यां तृतीयः सर्गः ॥ ३ ॥

गोपालकतामवाप । प्रथमतःवत्सपालो भूत्वा ततो गोपालकोऽभूदिति भावः ॥ ३१ ॥
इति श्रीमणिमंजरीटीकायां श्रीमत्कविकुलतिलकत्रिविक्रमपंडिताचार्यसुतनारायणपंडिता चार्यविरचित मणिमंजरीटीकायां तृतीयसर्गःसमाप्तः ॥ ३ ॥ श्रीकृष्णार्पणमस्तु ।



श्रीकृष्णाय इति । स कृष्णः कृष्णायाः कृष्णवर्णत्वेन कृष्णानाम्न्याः यमुनायाः सकाशात् कालियं कालियनागं त्यक्त्वा बहिर्निष्कास्य दावाग्निं वनवह्निं पीत्वा पानं कृत्वा विषद्रुमं विषवृक्षं उग्राभिधं दैत्यं उच्छिद्य नाशयित्वा । गोवपुषः गोरूपधरान् दैत्यान् अहनत् हतवान् । ननु भागवते कालीयमित्युक्तत्वात् कालियमिति कथमितिचेत् कालियनाग इत्यपि प्रयोगात् । पुरुषः पूरुषः हनुमान् हनूमान् एवमत्रापि ह्रस्वः ॥ १ ॥

ॐ कृष्णायाःकालियं त्यक्त्वा पीत्वा दावाग्निमुल्बणं । स विषद्रुममुच्छिद्य दैत्यान् गोवपुषोऽहनत् ॥ १ ॥
स सप्तोक्षवधाल्लेभे नीलां गोपालकन्यकां । बलेन धेनुकं हत्वा जघानान्यान् खरान् स्वयं ॥ २ ॥

स इति । सः कृष्णः सप्तोक्षवधात् सप्त च ते उक्षाणश्च सप्तसंख्याकवृषभाः सप्तोक्ष्णां वधात् पणरूपात् नीलां नीलानाम्नीं गोपालकन्यकां लेभे । डुलभष्प्राप्तौ लिडात्मनेपदं । बलेन बलरामेण धेनुकं धेनुकासुरं हत्वा घातयित्वा अन्यान् खरान् खररूपदैत्यान् स्वयं जघान । हनहिंसागत्योरित्यस्माद्धातोः । कर्तरि लिट्

प्रलंबे बलभद्रेण हते दावं पपौ पुनः । नंदजो व्रजरक्षार्थं कृपासिंधुर्हि माधवः ॥ ३ ॥
विप्रपत्नीभिरानीतं तद्गृहांतिकमागतः । सोऽन्नं सानुचरो भुक्त्वा चक्रे तासामनुग्रहं ॥ ४ ॥

परस्मैपदं ॥ २ ॥ प्रलंब इति । नंदजः नंदाज्जायत इति नंदजः प्रलंबे प्रलंबनामके असुरे हते सति व्रजार्थं गोकुलसंरक्षणार्थं पुनः दावं वनवन्हि पपौ पा पाने लिट् । दवदावौ वनानलावित्यभिधानात् । कृत इत्यंत

आह । हीति । हि यस्मात् माधव:कृष्ण:कृपासिंधु: ।। ३ ।। विप्रेति कृष्ण:तद्गृहांतिकं तासां विप्रपत्नीनां गृहांतिकं आगत:विप्रपत्नीभिरानीतं अन्नं षड्रसान्नं सानुचर:सन् गोपालकै:सहित:सन् तासां विप्रपत्नीनां अनुग्रहं चक्रे ।। ४ ।। मखेति । स कृष्ण:वृष्टिं सोढुमशक्तान् स्वान् स्वीयान्नंदादीन् गोपान् पर्वतं गोवर्धनपर्वतंनामकरेणोद्धृत्य ररक्ष रक्षपालने लिट् । कथंभूतां वृष्टिं इंद्रेण मखभंगरुषा मखस्य भंग: मखभंग: तेन, रुट् यस्य स:तया । तेन स्वात्मानमुद्दिश्य क्रियामणस्योत्सवस्य भंगेन नाशेन जातया रुट् क्रोध: तया

मखभंगरुषेंद्रेणादिष्टैर्मेघैर्कृतां हरिः । वृष्टिं सोढुमशक्तान्स्वान् ररक्षोद्धृत्य पर्वतं ॥ ५ ॥
आर्यानुग्रहसंप्राप्तकामा गोपांगनास्ततः । रमयामास, गोविंदश्चिरमैषीषु रात्रिषु ॥ ६ ॥

आदिष्टै:मेघै: असाप्तरात्रं अविच्छेदेन कृतां विरचितां अथवा मखभंगेन जातां रूट् यस्य स तथोक्तः । मखभंगे पाठे मखस्य स्वात्मानमुद्दिश्य क्रियमाणयज्ञस्य स तथोक्त: ।। ५ ।। आर्येति । तत:गोविंद:श्रीकृष्ण: चिरमैषीषु इष:आश्वि नमास:तत्संबंधिन्य:ऐष्य: तासु रात्रिषु । शरदि रात्रिष्वित्यर्थ: । स्यादाश्विन इषोप्याश्वयुज इत्यमर: । गोपांगना: गोपसुंदरी:रमयामास । ताभि: कुसुंभरंगोत्सवमनुभूयेत्यर्थ: । कथंभूता: गोपांगना: आर्यानुग्रहसंप्राप्तकामा: आर्याया: पार्वत्या: अनुग्रहेण संप्राप्त:कामो याभिस्ता: आर्यानुग्रहसंप्राप्तकामा: । आर्या दाक्षायणी चैव गिरिजा मेनकात्मजेत्यमर: ।। ६ ।। सुरूपीणां चेति । भगवान्कृष्ण: स्वयं साक्षाद्देवेत्यर्थ: । रासक्रीडामहोत्सवे । महांश्चासौ उत्सवश्चमहोत्सव: रासक्रीडैव महोत्सव:तस्मिन्

सुरूपीणां च गोपीनां मंडले भगवान् स्वयं । ननर्त वेणुना गायन् रासक्रीडामहोत्सवे ॥ ७ ॥
शंखचूडासुरं हत्वारिष्टं केशिनमप्यथ । मयपुत्रं पुनर्व्योमं स चक्रे व्रजरक्षणं ॥ ८ ॥

सुरूपीणां सुंदरीणां गोपीनां मंडले समूहे वेणुना मुरलीवाद्येन गायन् गानं कुर्वन् ननर्त नृत्यमकरोत् । अंगनामंगनामंतरे माधवो माधवं माधवं चांतरेणांगनाः । इत्थमाकल्पिते मंडले मध्यमः संजगौ । वेणुना देवकीनंदनः एवं रासक्रीडां चकारेत्यर्थः ॥७॥ शंखेति । अथ सःकृष्णः शंखचूडासुरं अरिष्टनामकं वृषभासुरं केशिनं केशिनामकं हयासुरं मयपुत्रं दैत्यवर्धकिं मयपुत्रं व्योमं व्योमासुरं हत्वा पुनःव्रजरक्षणं च गोकुलरक्षणं चक्रे । पुनःनानाविधासुरनिकरोद्भूतमहापदं परिहृत्य गोगोपकुलं पालितवानित्याशयः ॥८॥

कंसप्रेषितमक्रूरं दृष्ट्वा संभाव्य तं हरिः । तेन साकं ययौ देवो मधुरां बलसंयुतः ॥ ९ ॥
भंक्त्वा कंसधनुःशार्वं हत्वांबष्टं च वारणं । चाणूरमुष्टिकौ हत्वा सबलःशुशुभे हरिः ॥ १० ॥
मंचस्थं मातुलं कंसं मूर्ध्नि संगृह्य माधवः । निपात्य निष्पिपेषोच्चैर्धरिण्यां स ममार च ॥ ११ ॥

कंसेति । देवःकृष्णःकंसेन प्रेषितमक्रूरं दृष्ट्वा संभाव्य आलिंगनादिबहुमानं कृत्वा तेनाक्रूरेण साकं निपात्य संयुतःबलरामेण युक्तः सन् मधुरां प्रति ययौ ॥ ९ ॥ भंक्त्वेति । सबलः हरिः शार्वं रुद्रसंबंधिधनुः भंक्त्वा विभज्य वारणं गजं । वारणं प्रतिषेधेस्याद्वारणस्तुगतंगज इति विश्वः । अंबष्टं हस्तिपं हत्वा चाणूरमुष्टिकौ हत्वा शुशुभे । दिदीप्तौ शुभदीप्तौ लिट् ॥ १० ॥ मंचस्थमिति । माधवःकृष्णः मंचस्थं मंचे

आसनविशेषे स्थितं मातुलं मातुर्भ्रातरं कंसमूर्ध्नि शिरसि केशेषु गृह्य धरिण्यां भूमौ निपात्य उच्चैः अधिकं यथा तथा निष्पिपेष ममर्द लिट् । स कंसःममार च । मृङ्‌मरणे लिट् ॥ ११ ॥ तद्बलमिति ।

तद्बलं सकलं हत्वा जनान्सर्वाननंदयत् । विमुच्य निगडादीशःपितरावभ्यवंदत ॥ १२ ॥
पुत्रीवैधव्यसंक्रुद्धमभियांतं जरासुतं । सबलोऽभ्यर्दयत्कृष्णो हत्वा तत्सैनिकान्मुहुः ॥ १३ ॥

ईशःकृष्णःसकलं तद्बलं तस्य कंसस्य बलं सैन्यं हत्वा । वरुथिनी बलं सैन्यमित्यमरः । सर्वान् जनान् संतोषयत् । पितरौ माता च पिता च पितरौ । निगडात् शृंखलाबंधात् विमोच्य मोचयित्वा अभ्यवंदत नमश्चकार ॥ १२ ॥ पुत्रीति । सबलःबलेन बलरामेण सहितःकृष्णः पुत्रीवैधव्यसंक्रुद्धं पुत्र्योः आस्तिप्राप्त्योःवैधव्येन विधवात्वेन संक्रुद्धं कुपितं अभियांतं जरासुतं जरासंधं अभ्यर्दयत् ममर्द । किं कृत्वा तत्सैनिकान् तस्य

पांडुर्वने मृतःपार्था आनीता मुनिभिःपुरं । पीड्यंते कुरुभिःस्वैरमित्याश्रावि मधुद्विषा ॥ १४ ॥
अक्रूरं प्रेषयामास कृष्णो नागपुरं प्रति । कुरूणामनयं ज्ञात्वा धृतराष्ट्रमुवाच सः ॥ १५ ॥

जरासंधस्य सैनिकान् सेनाःमुहुःबहुवारं हत्वा ॥१३॥ पांडुरिति । पांडुःपांडुचक्रवर्ती वने मृतःमुनिभिः पार्थाः पुरं नागपुरं प्रति आनीता संतःकुरुभिर्दुर्योधनादिभिः स्वैरं निकामं पीड्यंते बाध्यंते विषप्रयोगादिनेति शेषः । पीडपीडने लट् । इत्यनेन प्रकारेण मधुद्विषा मधुंद्वेष्टीति मधुद्विट् तेन कृष्णेन मधुरापुर्यां स्थितेनेति शेषः ।

आश्रावि शुश्रवणे कर्मणि लुट् ॥१४॥ अक्रूरमिति । कृष्णः अक्रूरं नागपुरं प्रति हस्तिनपुरं प्रति प्रेषयामास । अक्रूरःकुरूणां अनयं अन्यायं ज्ञात्वा धृतराष्ट्रं प्रत्युवाच ॥१५ ॥ तवेति । हे धृतराष्ट्र तव पुत्राः भीमसेनाग्निभस्मिताः भीमसेनः एवाग्निः तेन भस्मिताः भस्मीभूताःसंतः भीमपार्थाभ्यां भीमार्जुनाभ्यां सहितःसन् न

तव पुत्रा न संत्येव भीमसेनाग्निभस्मिताः । इत्युक्त्वा भीमपार्थाभ्यां सहितःप्रययौ पुरीं ॥१६॥
पूजयंतौ हरिं पार्थौ पूजितौ सर्वयादवैः । ऊषतुःसुचिरं तत्र भक्तिज्ञानामृताशनौ ॥ १७ ॥

संत्येवेत्युक्तः अक्रूर इति शेषः । पुरं प्रति ययौ ॥१६॥ पूजयंताविति । पार्थौ भीमार्जुनौ मधुरायां सुचिरं बहुकालं ऊषतुः वासं चक्रतुः । वसनिवासे लिट् । कथंभूतौ हरिं कृष्णं पूजयंतौ सर्वयादवैःपूजितौ भक्तिज्ञानामृताशनौ भक्तिज्ञाने एव अमृतं तदश्नत इति भक्तिज्ञानामृताशनौ ॥ १७ ॥ उद्धवमिति । भगवान्

उद्धवं प्रेषयामास व्रजशोकापनुत्तये । भगवान्मगधाधीशं पुनरभ्यर्दयद्युधि ॥ १८ ॥
स सृगालाधिपं हत्वा तत्पुत्रं पर्यपालयत् । इति चित्राणि कर्माणि चकार पुरुषोत्तमः ॥ १९ ॥

कृष्णः व्रजशोकापनुत्तये व्रजस्य व्रजजनस्य शोकापनुत्तये शोकपरिहारार्थं उद्धवं प्रेषयामास । मगधाधीशं मगधदेशाधिराजं जरासंधं पुनःयुधि युद्धे अभ्यर्दयत् ॥१८॥ स इति । स कृष्णः सृगालाधिपं करवीरपुराधिपतिं सृगालवासुदेवं हत्वा तत्पुत्रं सृगालवासुदेवस्य शंखचक्रदेवनामानं पर्यपालयत् । तद्राज्ये अभिषिच्य अपालयत् । पुरुषोत्तमः उक्तरीत्या चित्राणि चकार ।१९ ॥ रुक्मिणीस्वयंवरमाह । भीष्मकस्येति । देवः

भीष्मकस्य सुतां देवीं रुक्मिणीमवहत्ततः । विज्ञानानंदरूपिण्या स रेमे रमया तया ॥ २० ॥
लब्धं सत्राजिता सूर्यात् स सिंहापहृतं ततः । रत्नं जांबवता नीतं जांबवत्या सहानयत् ॥ २१ ॥

कृष्णः भीष्मकराजस्य भीष्मकस्य पुत्रीं रुक्मिणीं अवहत् । सः विज्ञानानंदरूपया विज्ञानानंदरूपं देहःअस्या अस्तीति सा तथोक्ता रमया रमास्वरूपया तया रूक्मिण्या रेमे ॥२०॥ इदानीं सत्यभामाजांबवत्योर्विवाहप्रकारमाह । लब्ध इति । स जांबवता जित्वेति शेषः । जांबवत्या सह रत्नं स्यमंतकमणिं आनयत् । कीदृशं रत्नं सत्राजि न्नाम्ना राज्ञा सूर्यात्तपसा लब्धं प्राप्तं । पुनःकीदृशं सिंहापहृतं तदनुजं प्रसेनं हत्वेति शेषः सिंहेनापहृतं पुनःकीदृशं सिंहं हत्वेति शेषः । जांबवता आनीतं ततोनंतरमपहृतं ।। २१ ॥ सत्राजित इति ।

सत्राजिते ददौ रत्नं तेन दत्तां सरत्नकां । सत्यभामामुदवहत् साक्षाल्लक्ष्मीं परात्परः ॥ २२ ॥
हतवान् सानुजं हंसं कृष्णो रेमे स्वधामनि । पुत्रान् प्रद्युम्नसांबादीन् रुक्मिण्याद्यास्वजीजनत् ॥ २३ ॥

परात् उत्तमात् रमाब्रह्मादेः सकाशात्परः उत्तमःश्रीकृष्णः स्वापराधपरिहारार्थमिति शेषः । सत्राजिते रत्नं ददौ । तेन सत्राजिता दत्तां सरत्नकां स्यमंतकसहितां सत्यभामामुदवहत् उपयेमे । साक्षाल्लक्ष्मीं जांबवत्यादिवदावेशं विना भूरूपां लक्ष्मीस्वरूपां ॥ २२ ॥ हतवानिति । कृष्णःसानुजं डिभिकाख्येन सहितं हंसं तन्नामासुरं हतवान् सन् द्वारवत्यामिति शेषः । स्वधामनि स्वगृहे रेमे । धामगेहेरश्माविति विश्वः । अथ द्वारवतीनामकस्वगृहमित्यर्थः । रुक्मिण्याद्यासु महिषीषु प्रद्युम्नसांबादीन् पुत्रान् अजीजनत् जनयामास । ॥ २३ ॥ पांडवा इति । पांडवा द्रोणमासाद्य कृत शस्त्रास्त्रशिक्षणाः कृतं शस्त्रास्त्रयोः शिक्षणं अभ्यासो

पांडवा द्रोणमासाद्य कृतशस्त्रास्त्रशिक्षणाः । सर्वविद्यातिशयिनो मुमुदुःकृष्णसंगताः ॥ २४ ॥
संभाविता भगवता पांडवाःस्नेहसंभृताः । अनुज्ञाताः पुरं जग्मुःसदा तद्भक्तितत्पराः ॥ २५ ॥

यैस्ते तथोक्ताः संतः सर्वविद्यातिशायिनः सर्वविद्यासु अतिशयवंतः उत्कर्षवंतः संतः कृष्णदर्शनार्थं द्वारवतीं प्रति गताः । सर्वव्यापारेषु कृष्णेन सह वर्तमानाःसंतःमुमुदुः । मुदहर्षे लिट् ॥ २४ ॥ संभाविता इति । पांडवाःभगवता कृष्णेन संभाविताः बहुमानिता संतः अनुज्ञाता संतः पुरं प्रति नागपुरं प्रति । कथंभूताः स्नेहसंभृताः भक्तिपूर्णाः अतएव तद्भाविताः पराः तस्य कृष्णस्य भावे तत्पराः आसक्तिवंतः ॥ २५ ॥

स्वामित्वेन सुहृत्वेन बन्धुत्वेन च पांडवाः । सखित्वेन गतित्वेन तमेव शरणं ययुः ॥ २६ ॥
पुरान्निर्यापिता दुष्टैर्हिडिंबं च बकं तथा । निहत्य पांडवाःप्रापुःकृष्णं कृष्णास्वयंवरे ॥ २७ ॥

परमभागवताः अन्यत्र गताः अपि स्वामित्वाधिपादिभिः तमेव शरणं ययुरित्याह । स्वामित्वेन सुहृत्त्वेन सखित्वेन बंधुत्वेन गतित्वेन तमेव कृष्णमेव ययौ । उपलक्षणमेतत् पितृत्वाद्युपाधिभिरपि ज्ञातव्यं । पिता सुहृद्बंधुरित्यादेः । कृष्ण एव स्वामी एव सुहृत् इत्यादिप्रकारेण कृष्णमेव शरणं प्राप्ता इति भावः ॥२६॥ पुरादिति । पांडवाःपुरात् हस्तिनपुरात् निर्यापिताः निष्कासिताःसंतःहिडिंबं हिडिंबासुरं वने निहत्य । तथा बकासुरं एकचक्रनगरे निहत्य । पांचालनगरं प्राप्य द्रौपदीस्वयंवरे कृष्णं दृष्ट्वा मनसा प्रणम्य धनुषा लक्ष्यवेधं कृत्वा दौपदीं प्रापुः ॥२७॥ लब्ध इति । कृष्ण इत्यध्याहार्यं । लब्धकृष्णान् लब्धा प्राप्ता कृष्णा

लब्धकृष्णाननुज्ञाप्य पांडवान् स्वपुरं गतः । निहत्य शतधन्वानं पार्थानामंतिकं ययौ ॥२८॥
कारयित्वा हरिप्रस्थं तत्र पार्थान्निवेश्य सः । उपयेमे च कालिंदीं द्वारकामाप माधवः ॥२९॥

द्रौपदी यैस्ते तथोक्ताः तान् स्वात्मानं प्रेषयितुं समागतानिति शेषः । पांडवान् अनुज्ञाप्य स्वपुरं गतः सन् सत्यभामापितुः वधं कर्तारं शतधन्वानं तन्नामकं यादवं निहत्य पार्थानां पांडवानां अंतिकं ययौ । पांचालनगरे द्रौपदीविवाहं श्रुत्वा पांडवानां पारिबर्हप्रदानार्थं ययाविति भावः ॥ २८ ॥ कारयित्वा विश्वकर्मणेति शेषः । तत्रेंद्रप्रस्थे पार्थान् निवेश्य निधाय उपयेमे अवहत् । यमउपयमे इत्यमाद्धातोः कर्तरि-

नीलां नग्नजितः पुत्रीं मित्रविंदां पितृष्वसुः । भद्रां च कैकयसुतां लक्षणां स्वां च सोऽवहत् ॥३०॥
सोप्याश्चर्यतमो धन्यो भौमं हत्वा दिवं गतः । अपाहरत्पारिजातं पराजित्य पुरंदरं ॥३१॥

लिट् । ततो द्वारकामाप ॥२९॥ नीलामिति । स कृष्णः नग्नजितः तन्नामकासुरराजः पुत्रीं नीलां पितृष्वसुः वसुदेवभगिन्याः पुत्रीं मित्रविंदां च कैकयसुतां भद्रां च स्वां स्वकीयां लक्षणां चावहत् । गोपकन्यां नीलां इयं नीलां चेकैव अतो न विरोध इति भावः ॥३०॥ स इति । अथ स कृष्णः आश्चर्यतमः त्वं धन्य इति नारदेनोक्त इति शेषः । अनेन नारदः आकाशादागत्य कृष्णं प्रति त्वमाश्चर्यः त्वं धन्य इत्युवाच । कृष्णः दक्षिणाभिः साकं इत्युवाचेत्यादिकथानुसंधेयेति सूचितं । भौमं अदितिकुंडलापहारिणं भूमिपुत्रं नरकासुरं हत्वा अदित्यै कुंडलप्रदानार्थं दिवं प्रति गतः सन् पुंरदरं देवेंद्रं युधि पराजित्य पारिजातं तन्नामकवृक्षं अपा-

महिषीणां सहस्राणि षोडशावहदच्युतः । शतं च तासु प्रत्येकं पुत्रा दशदशाऽभवन् ॥३२॥
द्यूते जितांःकृतारण्यवासा अज्ञातवासतः । पारंगता उपप्लाव्ये पार्थास्तं प्रति लेभिरे ॥३३॥

हरत् हृतवान् ।।३१।। महिषीणामिति । अच्युतः श्रीकृष्णः कृष्णमहिषीत्वयोग्यानां कन्यानां षोडशसहस्र-कन्यानां शतं च अवहत् । शतोत्तरषोडशसहस्रसंख्याकाःराजकन्याःउवाहेत्यर्थः । कृष्णस्य तासु स्त्रीषु प्रत्येकं दश पुत्रा अभवन् । एकैका कन्या आसीदिति ज्ञातव्यं ।। ३२ ।। पार्था उपप्लाव्ये नगरे तं कृष्णं प्रति लेभिरे प्रापुः । कीदृशाः पर्थाःद्यूते द्यूतक्रीडायां पराजिताःकृतारण्यवासाः अज्ञातावासतः अज्ञातवा-

दौत्येन वंचयित्वारीन् प्रायो भीमेन सर्वशः । जघान कृतसारथ्यःकृष्णःपार्थानपाद्धरिः ॥३४॥
वायुर्वंशानिवान्योन्यं प्रतिघट्टनसंभवैः । वैरवैश्वानरज्वालैःसंजहार हरिर्यदून् ॥३५॥

सात । पारंगताः समाप्तिं प्राप्ताः ।।३३।। दौत्येनेति । हरिः कृष्णः सर्वज्ञोपीति शेषः । दौत्येन दूतैः क्रिय-माणं कर्म दौत्यं तेन कुरुपांडवयोः संधानलक्षणकर्मणेत्यर्थः। अरीन् दुर्योधनादीन् वंचयित्वा अस्माभिस्तावत् संधानं एभिर्न गणितं इति वंचयामासेत्यर्थः । भीमेन निमित्तेन प्रायः बाहुल्येन सर्वशः समस्तान् अरीन्-शत्रून् जघान । अर्जुनादिभिरपि शत्रुसंहारस्य कृतत्वात् बाहुल्येनेत्युक्तं । कथंभूतःकृष्णः अर्जुनस्य कृतं सारथ्यं येन स तथोक्तः । कृतजिष्णुसारथ्यः सापेक्षत्वे पिविनिगमकत्वात्समासः । ततःसर्वआधिपत्यं दत्वा पार्थान् पांडवान् अपात् अपालयत् । लङ् परस्मैपदं ।। ३४ ।। कृष्णःस्वीयं धाम जिगमिषुः सन् स्ववं-

शोत्सादनं कृतवान् सदृष्टांतमाह । वायुरिति । वायुर्महान्वातःपरस्परं वायुसंघर्षजन्याग्निज्वालाभिः वंशानिव कीचकानिवहरिः अन्योन्यप्रतिघट्टनसंभवैः प्रतिघट्टनात् संघट्टनाद्भवतीति तथोक्ताः तैवैर एव विरोध एव वैश्वानरःअग्निःतस्य ज्वालैःअर्चिभिः यदून् सर्वान् यादवान् संजहार संहृतवान् । हृञ् हरणे लिट् । वन्हेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखास्त्रियामित्यमरोक्तेः । ज्वालाशब्दस्योभयलिंगत्वं ॥ ३५ ॥ एवं भूभारं

उद्धवं सनकादींश्च दुर्वासः प्रभृतींश्च सः । न्ययुंक्त सर्ववेदांतवर्तने सह शिष्यकान् ॥ ३६ ॥

संहृत्य धर्मसंस्थापानार्थमवतीर्णेन श्रीकृष्णेन धर्मप्रतिपादनमपि कृतमित्याह । उद्धवमिति । स भीमेन हित इति शेषः । उत्तरत्र भीमानुशिक्षिता इत्युक्ते उद्धवं सनकादींश्च सह शिष्यकान् शिष्यैः सहितान् दुर्वासः प्रभृतीन् दुर्वासादींश्च सर्ववेदांतवर्तने तादर्थ्ये सप्तमी । सर्वेषां वेदानां सकलसदागमप्रवृत्तमित्यर्थः । न्ययुंक्त ज्ञापितवानास । युजवण लट् ॥३६॥ श्रीकृष्णस्य स्वलोकयानप्रकारमाहएवमिति । एवमुक्तरीत्या चित्रचरित्रः चित्राणि चरित्राणि यस्य स तथोक्तः । पांडवान् अनुज्ञाप्य अहं स्वलोकं प्रति गतः । यूयमपि आगच्छध्वमिति दारुकमुखेन आज्ञाप्येत्यर्थः । स्वयं भूमौ गोपालमंत्रजपतां फलदानाय अदृश्येन रूपं आसाद्य स्थितिं कृतवान् । स कृष्णः एकेन रुपेणेति अंतरिक्षस्थं सूर्यमंडलं ययौ । उपलक्षणमेतत् अथ एकेन रूपेण शिवलोकं ययौ । चतुर्थेन रूपेण ब्रह्मलोकंययौ । पंचमेन रूपेण श्वेतद्वीपाख्यं ययौ । तदुक्तं महाभारततात्पर्यनिर्णये । गोपालमंत्रं भजतां फलप्रदस्त्वेकेन रूपेण स भुव्यदृश्यःतस्थौ । द्वितीयेन च सूर्यमंडले तृतीयमा-

एवं चित्रचरित्रस्तु कृष्णोऽनुज्ञाप्य पांडवान् । रूपेणैकेनास भूमावेकेन स दिवं ययौ ॥ ३७ ॥
एवं कृष्णसहायास्ते पार्था दुर्योधनादिकान् । श्रीकृष्णद्वेषिणो हत्वा सकृष्णाःकृष्णमन्वयुः ॥ ३८ ॥

सीच्छिवपूजितं वपुः । संपूजितं ब्रह्मलोके चतुर्थं कंजोद्भवेनाथपरं स्वधामेति । श्वेतद्वीपस्थं ययौ । इत्यत्र प्रमाणं तु द्वितीयसर्गादिवोक्तं ।।३७।। पांडवानां स्वलोकगमनप्रकारमाह एवमिति । पूर्वोक्तप्रकारेण कृष्णसहायाः कृष्णः सहायो येषां ते तथोक्ता ते पार्थाः पांडवाःश्रीकृष्णस्य द्वेषिणः दुर्योधनादीन् हत्वा राज्यमपालयदिति शेषः । सकृष्णाःद्रौपद्या सहिताः कृष्णं अन्वयुः । कृष्णस्य स्वधामप्रवेशानंतरं पांडवा अपि च कालरूपं प्रविशुरिति भावः ।।३८।। इदानीं कुरुपांडवसंतानबीजभूतपरीक्षद्राजचरितं निरूपयति ।

अथाभिमन्योस्तनयः परीक्षद्राजा सवज्रो जगतीं विजित्य । सर्वात्मभावं परमे दधानः साम्राज्यलक्ष्मीमुपलभ्य रेमे ॥ ३९ ॥ इति श्रीमणिमञ्जर्यां चतुर्थः सर्गः ॥ ४ ॥

अथेति । अथ कृष्णस्य स्वलोकप्राप्त्यनंतरं अभिमन्योस्तनयःपरीक्षन्नामको राजा साम्राज्यलक्ष्मीं सार्वभौमतामुपलभ्य जगतीं सप्तद्वीपवतीं भूमिं विजित्य भूमंडलगतक्षत्रियान् पराक्रमेण वशीकृत्येत्यर्थः । रेम इत्यन्वयः । कथंभूतः परमे सर्वोत्कृष्टे विष्णौ सर्वात्मभावं श्रवणकीर्तिविद्याभक्तिं दधानः कुर्वाण इत्यर्थः । पुनः कथंभूतःसवज्रः अनिरुद्धपुत्रेण वज्रेण सहितःइत्यर्थः । अर्जुनःपरीक्षद्राजाभिषेकसमये श्रीकृष्णवंशोत्पन्नस्य श्रीकृष्णप्रियस्य प्रद्युम्नपौत्रस्य शूरसेनेंद्रप्रस्थे च राज्याभिषेकं चकार । परीक्षदपि श्रीकृष्णप्रियत्वात्तेन

सह सर्वीरान् शत्रून् विजित्य धर्मतः पालयामासेति भावः । इदमप्युक्तं महाभारततात्पर्यनिर्णये । अनिरुद्ध-सुतं वज्रं प्रियं कृष्णस्य सद्गुणं । सशूरसेनेंद्रप्रस्थराजानमकरोद्वशीति । सर्वंमतिमंगलं ।। ३९ ।।

इति श्रीमणिमंजरीटीकायां श्रीमन्नारायणपंडिताचार्यकृतायां चतुर्थःसर्गःसमाप्तः ।।३।। श्रीकृष्णार्पणमस्तु



श्रीगुरुभ्यो नमः । पूर्वंचतुःसर्गे रामकृष्णकथां संक्षेपेणोक्त्वा पारंपारगुरुपीठिकाकथनार्थं अष्टाविंशति तमे कलियुगे त्रिशतोत्तरे चतुःसहस्रवत्सरे गते-सति । त्रैपुराःअसुराःबुद्धेन मोहिताः संतः परीक्षदाद्याःक्षेमकांता राजानःकलियुगे सहस्रवत्सरान् राज्यं कृत्वा गताः । अनन्तरं नानाप्रकारमिथ्यावादशास्त्राणि चक्रुः । सर्व-सिद्धांतशास्त्रेषु नष्टेषु सत्सु सच्छास्त्रे संप्रदायप्रवृत्यर्थं श्रीवायुरवतारं श्रीनारायणाज्ञया चकार । तत्कथा-मुत्तरचतुःसर्गे नारायणपंडिताचार्यः कथयति।तत इति।कृष्णपांडवगमनानंतरं कृष्णभीमानुशिक्षिताः अत्रिजो

ततःपरमहंसा ये कृष्णभीमानुशिक्षिताः। व्यासाश्रयादत्रिजाद्या वेदशास्त्राण्यवर्तयन् ॥ १ ॥
कृष्णे भीमे च विद्वेषमधिकं दधतो सुराः। भग्नबाहुबला ईषुर्वाग्युद्धैस्तत्वविप्लवं ॥ २ ॥

दुर्वासा एवाद्यो येषां अत्रिजाद्याः ते तथा । ये परमहंसाःव्यासाश्रयात् वेदशास्त्राणि अवर्तयन् । वृतुवर्तने लङ् ।।१।। कृष्ण इति । कृष्णे भीमे च कृष्णभीमविषये विद्वेषमधिक अति यथा भवति तथा । इदमव्ययं

दधतः असुराः दैत्याःबाह्वोर्बलं बाहुबलं भग्नं बाहुबलं येषां ते भग्नबाहुबलाः संतः वाग्युद्धैः वागाख्यशरैः-युद्धानि वाग्युद्धानि तैस्तथा । तत्वस्य विप्लवं नाशं तत्वविप्लवं तत्तथा ईषुः । इषइच्छायां लिट् ॥२॥

रहःसंभूयते सर्वे बुद्धिमन्तो न्यमंत्रयन् । स्वकार्यसिद्धयेऽन्योन्यं यथा प्रज्ञाविजृंभणं ॥ ३ ॥
शकुनिर्द्वापरःस्माह वचस्तत्वार्थबृंहितं । लोकायततनूजेन चाणिक्येन प्रचोदितः ॥ ४ ॥

रह इति ये तत्वविप्लवं ईषुःते अबुद्धिमंतः मिथ्याज्ञानिनःएकांते संभूय मिलित्वा ते सर्वे स्वकार्यं स्वेषां कार्यं तस्य सिद्धिः तस्यै स्वकार्थसिद्धये अन्योन्यं परस्परं अन्व्ययं अप्रज्ञायां असद्बुद्धेःविजृंभण प्रकाशः यथा-भवति तथा अप्रज्ञाविजृभणं न्यमंत्रयन् विचारं चक्रुः । मंत्रविचारणे लङ् ॥३॥ शकुनिरिति । लोकाय-ततनजेन च।र्वाकस्य सुतेन चाणिक्येन बाणाख्येनेति क्वचित्पाठः । प्रचोदितःद्वापरःद्वापराभिमानी शकुनिः तत्वार्थे बृंहितं स्वमततत्वं पूर्णं वचः आह स्म । स्मातीते उवाच । बृंहाद्याहश्चमंत्रानामिति सूत्रेण ब्रूञा् व्य-

दुर्धर्षो भीमसेनो नः कृष्णोऽप्यत्यंत दुःसहः । ताभ्यां निरीक्षिता दैत्या मृत्युं यांति न संशयः ॥ ५ ॥
कृष्णो दैवं गुरुर्भीमो वेदविद्या च पार्वनी । तस्या उत्सादने नैव यातस्तावतिसंकटं ॥ ६ ॥

क्तायां वाचि तस्य लटि पंचसु । आहादेशः आह लट्परस्मैपदं ॥ ४ ॥ किमित्याह नःआस्माकं भीमसेनः धर्तुमशक्योद्दुर्धर्षः कृष्णोऽत्यंतं दुःसहः उत्कृष्टेन धर्तुमशक्यः ताभ्यां कृष्णभीमांभ्यां निरीक्षिताःदैत्याः मृत्युं

मरणं यांति ; तत्र संदेहो नास्ति । याप्रापणे लट् ॥ ५ ॥ पुनःकिमाह कृष्ण इति । कृष्णः दैवं देवता भीमो गुरुः पार्वती द्रौपदी वेदविद्या वेदशास्त्राभिमानिनी । तस्याःवेदविद्यायाःउत्सादनेनैव विनाशनेनैव तौ भीमकृष्णौ अतिसंकटं कष्टं अत्यंतकष्टं यातः । याप्रापणे लट् द्विवचनं ॥६ ॥ तस्मादिति । यस्मात्कारणात्अतिसंकटं यातः तस्मात्कारणात् जनेषु कैश्चिद्दैत्यैःअव्ययं भूतले भूमौ उत्पत्य भूत्वा अव्ययं वेदव्याख्यानशालिषु वेदानां व्याख्यानेषु शालिनःआसक्ताःतेषु तथा विद्वत्सु पंडितेषु जनेषु प्रविश्य । विद्या

तस्माज्जनेषु विद्वत्सु वेदव्याख्यानशालिषु। प्रविश्योत्साद्यतां विद्या कैश्चिदुत्पद्य भूतले ॥ ७ ॥
विपरीतानि शास्त्राणि कर्तव्यानि बहून्यपि। असत्तर्कैःकुतर्कैर्वा वेदविद्यानिरस्यतां ॥ ८ ॥

वेदविद्या उत्साद्यतां । षदल्विशरणगत्यवसादनेषु कर्मणि लडात्मनेपदं । एकवचनं ॥७॥ विपरीतानीति । विपरीतनि मिथ्याभूतानि शास्त्राणि कर्तव्यान्यपि असत्तर्कैःवेदविद्यानिरस्यतां कैश्चिदपि । असुक्षेपणे लडात्मनेपदं ॥ ८॥ वेदेति । कार्यांतरस्पृहा अन्यत्कार्यं कार्यान्तरं कार्यांतरे स्पृक् इच्छा येषां ते कार्यांत-

वेजशशास्त्रान्नो भीतिरास्ति कार्यांतरस्पृहा। लोयायतमतं मानहीनं नाद्रियते जनै ॥ ९ ॥

रस्पृहः तेषां नः अस्माकं वेदशास्त्राद्वंद्वैकबद्भावः । भीतिर्नास्ति जनैः लोकायतमतं चार्वाकशास्त्रं मानहीनं प्रमाणरहितमिति नाद्रियते । न मन्यते । दृआदरणे कर्मणि लिट् ॥ ९॥ अक्षपाद इति ।अक्षपादःकृष्णा-

अक्षपादःकणादश्च कपिलश्चापरो जनः । शास्त्रांतरणि कृत्वापि वेदद्वेषं न कुर्वते ॥ १० ॥
हरेण निहताःपूर्वं त्रैपुराअसुराःपुनः । जाताः संसर्गदोषेण पामराःश्रद्दधुःस्त्रयीं ॥११॥

दश्च कपिलश्च अपरः । अन्यो जनः चनसमूहः । शस्त्रान्तराणि शास्त्राणि कृत्वापि वेदद्वेषं न कुर्वते । कृञ् करणे कर्तरि लिडात्मनेपदं बहुबचनं ॥१०॥ हरेणेति । पूर्वंहरेण निहताः हताः त्रिपुराणां सुवर्णरजतायसां संबंधिनःअसुराःपुनर्जाता इति शेषः । संसर्गस्य संबंधस्य दोषः । तेन पामराःनीचाःसंतः त्रयीं वेदविद्यां श्रद्दधुः । स्वीकृतवंतःविश्वासं चक्रुः । डुधाञ् धारणपोषणयोः । विवर्णःपामरो नीचइत्यमरः ॥ ११ ॥

वेदोऽप्रमाणमित्युक्त्वा बुद्धस्तानप्यमोहयत् । बोद्धशास्त्रं ततस्तेनुरज्ञात्वा तन्मतं परं ॥ १२ ॥
निराश्रमान्दुराचारान् प्रत्यक्षं द्विषतःश्रुतीः । ब्राह्मणा गर्हयंत्येतान्वेदबाह्यानकौशलान् ॥ १३ ॥

वेद इति । बुद्ध बुद्धावतारे देवः अप्रमाणमित्युक्तत्वात् त्रैपुरान् असुरान् अमोहयत् । मुहुवैचित्ये लङ् । हि प्रिसद्धिः ततो दैत्याःसर्वविभक्तिकस्तसिः । परं तन्मतं तस्य बुद्धस्य मतं संमतं तत्तथा अज्ञात्वा बौद्धं बुद्धसंबंधिशास्त्रं तेनुः । तनुविस्तारे लिट् ॥१२॥ निराश्रमानिति । ब्रह्म अणंतीति ब्राह्मणाः दुराचारान् अणपणगतो गत्यर्थास्ते ज्ञानार्थाःनिराश्रमान् निर्गताः आश्रमाःब्रह्मचर्याद्या येषां ते तान् । श्रुतीःवेदान् । प्रत्यक्षं साक्षात् साक्षात्कारमित्यव्ययं । विद्विषतः द्वेषं कुर्वतः वेदबाह्यान् अकौशलान् जातु दैत्यानेतान् । गर्हयंति । गर्हनिं- दायां लिट् ॥१३॥ जैनेति । जैनाश्च पाशुपतशास्त्रज्ञाः लोकविद्वेषगोचराः लोकविद्वेषस्य

जैनपाशुपताद्यास्तु लोकविद्वेषगोचराः । वेदविद्वेषिणोप्येते तत्रोपायं न जानते ॥ १४ ॥
सर्वान्वेदान्द्विजो भूत्वाश्रितःपरममाश्रमं । वेदांतिव्यपदेशेन निरस्यन्नःपरं सुहृत् ॥ १५ ॥

गोचराः । इत्येते तत्र द्वेषे उपायं युक्ति न जानते । ज्ञाअवबोधने लट् । बहुवचनं ॥ १४ ॥ सर्वानिति । कश्चित् द्विजो भूत्वा परं आश्रमं व्यासाश्रमं आश्रितःसन् वेदांतिव्यपदेशेन वेदांतिनःते न वेदांतिव्याजेन सर्ववेदान् तान् निराकरिष्यतीत्यर्थः । कारकपदं । अस्माकं परःमुख्यःसुहृत् सखा ॥ १५॥ अस्मिन्निति । अस्मिन्कार्ये विदग्धोऽयं कुशलः मणिमानेव दृश्यते । अमुना राज्ञाकलिना कार्यसिद्धये आदेष्टुं आज्ञापयितुं

म.मं २३ अस्मिन्कार्ये विदग्धोऽयं मणिमानेव दृश्यते । आदेष्टव्योऽमुना राज्ञा कलिना कार्यसिद्धये ॥ १६ ॥ म.ग. ५
एवमुक्त्वा द्वापरेण कलिपूर्वाःसुरद्विषः । हृष्टाआहूय संभाव्य मणिमंतं बभाषिरे ॥ १७ ॥

योग्यो आदेष्टव्यःमयेति शेषः । दृश्यते दृशिर प्रेक्षणे लट् । आत्मनेपदं ॥१६॥ एवमि । द्वापरेण द्वापराभिमानिना उक्ताः कलिःपूर्वाःकलिःपूर्वो येषां ते दैत्याःहृष्टाः संतुष्टाःसंतःमणिमंतमाहूय बभाषिरे। भाषव्यक्तायां वाचि लडात्मनेपदं ॥ १७ ॥ याहीति । हे भ्रातःसहोदर मणिमन् तुभ्यं नमःत्वं भूमिं प्रतीति शेषः ।

याहि भ्रातर्नमस्तुभ्यमुत्पद्यस्व महीतले । विद्यावेदपुराणाद्याःभृशं विप्लावय द्रुतं ॥१८॥
विदूषय गुणान् विष्णोर्जीवैक्यं प्रतिपादय । भूमौ वृकोदराभावान्नाशंकां कर्तुमर्हसि ॥१९॥

याहि गच्छ या प्रापणे लोट् परस्मैपदं । त्वं महीतले उत्पद्यस्व । पदल्गतौ कर्तरि लोडात्मनेपदं । वेद-
पुराणाद्याः विद्याः । भृशं सम्यक् द्रुतं शीघ्रं विप्लावय । प्लवगतौ कर्तरि लोट् ।। १८।। विदूषयेति । हे
मणिमन् त्वं विष्णोर्गुणान्विदूषय । दुषणे लोट् । जीवैक्यं जीवानां ब्रह्मणा सहैक्यं एकत्वं जीवानां परस्पर-
मैक्यं च प्रतिपादय । पदल्गतौ लोट् । भूमौ वृकोदराभावाम् आशंकां कर्तुं नार्हसि । अर्हपूजायां लट् ।
परस्मैपदं । मध्यमपुरुषैकवचनं ।।१९।। भीमभावस्य कारणमाह अस्मास्विति । अयं भीमः अस्मासु बन्द्धं

अस्मासु बद्धवैरःसन् स्वस्थोप्यस्वस्थतां गतः । अनुज्ञाभावतो विष्णोर्नाधुना वतरत्ययम् ॥ २० ॥
वंश्यास्तु सनकादीनामधुना यतयो भुवि । एकदंडास्त्रिदंडाश्च वर्तंते तदनुव्रताः ॥ २१ ॥

वैरं यस्य सःबद्धवैरःसन् स्वस्थोपि अस्वस्थस्य भावो अस्वस्थता । तां तथा गंतुं विष्णोरनुज्ञाभावतः
अस्मद्धेतुतः अधुना इदानीं नावतरति नायाति । तृप्लनतरणयोः ।।२०।। वंश्या इति । अधुना भुवि सनकादी-
नां वंशे भवाःवंश्याः एकदंडो येषां ते एकदंडाः । त्रयो दंडो येषां ते त्रिदंडाः यतयः सनकादीनां तदनुव्रताः
संतः वर्तंते वृतुवर्तने लडात्मनेपदं ।।२१।। परेति । तत्र भरतखंडे महत्तपो यस्य सः महातपाः परतीर्थाभिधः

परतीर्थाभिधस्तत्र यतिरेको महातपाः । तमाश्रित्य प्रवर्तस्व ततः संभाव्यसे जनैः ॥ २२ ॥
वेदांतसूत्रैरस्माकं मतमैकात्म्यगोचरं । वितत्य सकलान्वेदानतत्वावेदकान्वद ॥ २३ ॥

परतीर्थ इंति अभिधा यस्य सः परतीर्थाभिधः । एको मुख्यस्तिष्ठति वर्तते । त्वं तं परतीर्थं आश्रित्य त्वं

प्रवर्तस्व । अद्वैतमिति शेषः । वृतुवर्तने लडात्मनेपदं । ततोऽनंतरं जनैःसंभाव्यसे लडात्मनेपदं । एके मुख्यान्यकेवला इत्यमरः ॥ २२ ॥ वेदांतेति । हे मणिमन् त्वं ऐकात्म्यगोचरं सदात्मस्वरूपं यस्य स एकात्मा । एकात्मनो भावः ऐकात्म्यं गोचरः विषयः यस्य तत्तथा । अस्माकं मतं शास्त्रं वेदांतसूत्रैः वेदांतोपनिषत्सूत्राणि ब्रह्मसूत्राणि च वेदांतसूत्रैस्तथा वितत्य विस्तृत्य सकलान् वेदान् अतत्वावेदाकान् अतत्वमयथार्थः असंमतान् वेदयंतीति अतत्वावेदकाः तान् वद । वदव्यक्तायां वाचि लोट् परस्मैपदम् ॥ २३ ॥ जीवेभ्य इति । हे

जीवेभ्योऽन्यो हरिर्ब्रह्मस्रष्टृत्वादिगुणान्वितः । इति वेदांतसूत्राणां हृदयं च तिरस्कुरु ॥२४॥
अस्मदावेशबलतःकलेःशक्त्या च पीडिताः । भवंति मलिनात्मानःसज्जनाःसांख्ययोगिनः ॥२५॥

मणिमन् त्वं जीवेभ्यः अन्यःभिन्नःस्रष्टृत्वम् । सर्जनमादिर्येषां ते स्रष्टृत्वादयः ते च ते गुणाश्च तैरखिलैः अन्वितःयुक्तःस्रष्टृत्वादिगुणान्वितः हरिर्ब्रह्मेति वेदान्तसूत्राणाम् । वेदानामंतोभ्यासः यैस्तानि वेदान्तानि च तानि सूत्राणि च तेषां उपनिषद्ब्रह्मसूत्राणां हृदयमभिप्रायं तिरस्कुरु । डुकृञ् करणे लोट् परस्मैपदं । मध्यमपुरुषैकवचनं ॥२४॥ अस्मदिति अस्मदावेशबलतः अस्माकमावेशबलतः कलेःशक्त्या च पीडिताः सांख्याः अस्माकं आवेशः तस्य बलं बलादिति बलतःयोगिनःसज्जनाःमलिनात्मानःमलिनःआत्मा येषां ते मलि-

मिथ्यावादं ततस्तेपि केचिच्छद्मधिरे परे । उदासते निराकर्तुं केचिदेव समीहते ॥२६॥
अभिप्रायात्कर्मतो वा केचिदसज्जना भुवि । जाता अन्ये जनिष्यंति निःसहायो जनिष्यसि ॥२७॥

नात्मानो भवंति ।।२५।। मिथ्येति । ततःअनंतरं केचित्तेपि सज्जनाः मिथ्यावादं शास्त्रं श्रद्धिरे विश्वासं चक्रुः । श्रइत्युपसर्गः डुधाञ्धारणयोर्लिडात्मनेंपदम् । अपरे अन्ये निराकर्तुं उदासते । आसशपवेशने प्रथम पुरुषबहुवचनं । केचिदेत्र निराकर्तु समीहते । ईहइच्छायां कर्तरि लिडात्मनेपदं बहुवचनम् ।।२६।। अभिप्रायादिति । केचिदस्मज्जना दैत्याः भुवि अभिप्रायात् स्वेच्छया कर्मतो वा जाताः अन्ये अपरे जनिष्यंति। हे मणिमंस्त्वन्निर्गतःसहायोऽस्मात्सः निःसहायःसन् जनिष्यसि । जायसे जनो प्रादुर्भावे ।। २७ ।।

इति दैत्यैःसमादिष्टो मणिमान् भीमभीमतां । मनसा शंकमानोपि भुव्युत्पत्तुं मनोदधे ॥२८॥
तत्काले शाक्यशास्त्रेण विस्तृता सकला मही । वैदिकाश्रमधर्मादेः पराभूतिरभूत्ततः ॥२९॥

इतीति । एवं देत्यैःसमादिष्टःमणिमान् मानसा भीमभीमतां भीमस्य भयंकरस्य भावःभीमभीमता तां तथा शंकमानोपि भुवि उत्पत्तुं मनो दधे डुधाञ्धारणपोषणयोर्लिडात्मनेपदं ।।२८।। तत्काल इति । तत्काले मणिमदागमनकाले शाक्यशास्त्रेण सकला मही विस्तृता व्याप्ता । ततो वैदिकाश्रमधर्मादेः वेदानां संबंधिनो वैदिकाः वैदिकाश्चते आश्रमाश्चवैदिकाश्रमधर्माश्च वेदिकाश्रमधर्माः वैदिकाश्च धर्मादयो यस्य स तथा पराभूतिः तिरस्कारः अभूत् । लुङ् ।।२९।। कथमित्यत आह इंद्रजालैरिति । इंद्रजालैर्मायाविद्याभिः

इंद्रजालैर्वशीकृत्य राजानं सौगतं प्रति । शून्यं तत्वं च संश्राव्य सतस्तेनोदसादयन् ॥३०॥
ततो गोविंदनामाऽभूद्विजो विद्याद्विशारदः । स चतुर्वर्णजाः कन्याः उढ्वा पुत्रानजीजनत् ॥३१॥

सुगतसंबंधि सौगतं प्रति सुगतसंबंधिदेशस्य राजानं प्रभुं वशीकृत्य सतःसमस्तान् जनान् शून्यतत्वं संश्राव्य सम्यगुपदेशं कृत्वा तेन राज्ञा वैदिककर्मेति शेषः । उदसादयन् षदल्विशरणगत्यवसादनेषु लट् परस्मैपदं ॥३०॥ तत इति । ततोऽनंतरं विद्याविशारदः विद्यायां कुशलः गोविंदनामा गोविंदभट्ट इति नाम यस्य स तथा द्विजोऽभूत् आसीत् । सःगोविंदभट्टः ब्राह्मणादिचतुर्वर्णेभ्यो चतुर्वर्णजाः उद्वा अवाप । पुत्रान् अजी- जनत् उद्वाह्य जनयामास जनीप्रादुर्भावे लट् ॥३१॥ कस्यां कस्यां कःको जातस्तेषां नाम किमिति जिज्ञा-



शबरो विक्रमादित्यो हरिश्चंद्रोऽथ भर्तृहृत् । इत्येते कोविदा आसन् धृतवर्णाश्रमव्रताः ॥३२॥
गोविंदो दारपुत्राद्यं विहायाथाचरन्महीं । व्यधत्त शबरो भाष्यं सूत्राणां जैमिनेरहः ॥ ३३ ॥



सायामाह । शबर इति ब्राह्मण्यां शबरः । क्षत्रियायां विक्रमादित्यः । वैश्यायां हरिश्चंद्रः । शूद्रायां भर्तृहृत् । दकारांतः इति नामानः कोविदाःएते कुमाराः धृतवर्णाश्रमव्रताः धृतानि वर्णाश्रमव्रतानि येषां ते ब्रह्मक्षत्रिय वैश्यशूद्राणां ते तथाआसन् असभुवि लङ् ॥३२॥ गोविंद इति । अथ पुत्रजननानंतरं गोविंदः दारपुत्राद्यं दाराश्च पुत्राश्चदारपुत्राःत एव आद्या यस्य तद्दारपुत्राद्यं क्षत्रियादिविहाय महीं अचरत् । चरगतिभक्षणयो- र्लङ् । शबरो ब्रह्माणीजः जैमिनेःसूत्राणां भाष्यव्याख्यानं रहःएकांते व्यधत्त चकार । डुधाञ् धारणपोषण-

क्ष्मामपाद्विक्रमादित्यो हरिश्चंद्रःसुरोत्तमान् । इष्ट्वायुर्वेदवशितामलभीष्ट परं वरं ॥ ३४ ॥
गत्वा यज्ञभुवं भर्तृहरिर्विप्रानुमोदितः । विचार्य यज्ञहृदयं स चचार महीमिमां ॥ ३५ ॥

योर्लडात्मनेपदं ॥३३॥ क्ष्मामपादिति । तैश्चतुर्भिःपुत्रायुक्तं तदाह । विक्रमादित्यःक्षत्रियतनुजःक्ष्मां मेदिनीं अपात् । पारक्षरणे लङ्. । हरिश्चंद्रो वैश्यातनुजः सुरोत्तमान् इष्ट्वा याजयित्वा वशोऽस्यास्तीति वशी वशिनोभावःवशिता आयुर्वेदस्य वैद्यशास्त्रस्य वशिता । आयुर्वेदवशिता तां तथा परं वरं अलभिष्ट । देवेभ्यः परः ॥३४॥ गत्वेति । स भर्तृहरिः शूद्रातनुजःयज्ञभुवं गत्वा विप्रानुमोदितःविप्रैःसंतोषितःसन् यज्ञहृदयं विचार्य इमां महीं चचार । लिट् ॥३५॥ आर्यस्येति । वेदं विद्वान् तस्य वेदविदुषःवेदज्ञस्य सकाशतः आर्य-

आर्यस्य वेदविदुषःप्राभूतां तनयावुभौ । भट्टःकुमारःप्रथमो भट्टःकुमारःप्रथमो भट्टनारायणःपरः ॥३६॥
कुमारस्तु तदा भेजे बौद्धं तन्मतवित्तये । नारायणेन संमन्त्र्य संप्राप्ते धर्मसंकटे ॥३७॥

स्य श्रेष्ठस्य शबरस्य भट्टाख्यःकुमारः प्रथमो भट्टकुमारः परःअन्यःभट्टनारायण इति । यौ प्राभूतांअभूतां । भूसत्तायां लङ्. ॥३६॥ कुमार इति । तदा बौद्धस्य शास्त्रस्य वित्तिर्ज्ञानं तस्यै तथा बौद्धं भेजे । भजसेवायां लिडात्मनेपदं ॥३७॥ प्रासादेति । अथ प्रासादस्य हर्म्यस्याग्रं प्रासादाग्रं तस्मिन् । अभ्यंजयिता उपाध्याय-

प्रासादाग्रे च शाक्यस्य भट्टोऽभ्यंजयिता पदे । वेदविप्लवनव्याख्यां श्रुत्वाश्रूणि न्यपातयत् ॥३८॥
तदुष्णिमानुमानेन विप्रस्याधिं विबुद्ध्य सः । हन्यतां हन्यतामेष छद्मात्मेति जगाद च ॥३९॥

शाक्यशिरसि तैलसेचनं कुर्वन् भट्टःभट्टकुमारः वेदविप्लवनव्याख्यां वेदानां विप्लवं व्याख्या । अप्रमाणमिति-तिवचनस्य व्याख्या तां तथा श्रुत्वा शाक्य पदे चरणे अश्रूणि नेत्रजलानि न्यपातयत् पतलृ पतने लङ् ।

हर्म्यादिधनिनां वास: प्रासादो देवभूभुजामित्यमर: ॥३८॥ तदिति । स शाक्य:तदुष्णिमानुमानेन तेषां-अश्रूणां उष्णिनुमानेन तथा विप्रस्याधि व्यथां विबुद्ध्य ज्ञात्वा एष भट्टकुमार: छद्म आत्मा स्वरूपं यस्य स छद्मात्मा । भवद्भिर्हन्यतां हन्यतां । आक्षेपे द्विपुक्ति: । हनर्हिंसागत्यो: कर्मणि लोडात्मनेपदं । स्व-शिष्यमितिशेष: । जगाद लिट् । पुंस्याधिर्मानसीव्यथेत्यमर: ॥३९॥ इदानीमिति । भट्टकुमार: इदानी-

इदानीं हंतुकामेऽस्मिन् न्यपतद्धरणीतले । भट्टो वेदा:प्रमाणं चेज्जीवामीति वचोऽब्रुवन् ॥४०॥
शंकुवेधेन तस्यैकं चक्षुर्नष्टं ततोऽभवत् । वेदप्रामाण्यसंदेहात् काणोऽसीत्यशरीरवाक् ॥ ४१ ॥

मस्मिन्काले अस्मिन् शाक्यं हंतुकामो यस्य स: हंतुकाम:तस्मिन् हंतुकामे सति तं कामं मनस्यरित्यतु नारा: वेदा: प्रमाणं चेदहं जीवाभीति बचो ब्रुवन्धरणीतले प्रासादाग्रात् न्यपतत् । पतल्निपाते लङ् । जीव-प्राणने लट् उत्तमपुरुषैकवचनम् ॥४०॥ शंकुरिति । तत: प्रासादपतनानंतरं तस्य भट्टकुमारस्य एकंचक्षु: शंकुवेधेन शंको:स्थाणो: वेध:तेनतथा नष्टमभूत् । वेदप्रामाण्यसंदेहात् हे भट्टकुमार त्वं काण: एकलोचन: आसीत् । अशरीरस्य वाक् अशरीस्य वाक् अभवदित्यर्थ: । असभुवि लट् मध्यमपुरुषैकवचनं । काण: स्यादे-कलोचन इत्यमर: । स्थाणुरस्त्रीध्रुव: शंकुरित्यमर: ॥४१॥ कदाचिदिति । राजासौगत:कदाचित् कस्मि-

कदाचित्तं रहो राजा समाहूयेदमब्रवीत् । देवताजनसंभाव्य मतं किंस्विद्द्विजेंद्र ते ॥४२॥
इत्युक्त:स महीभर्त्रा भट्ट:स्माहाविशंकित: । वर्णाश्रमोचिताधर्मा न हातव्या मुमुक्षभि: ॥४३॥

श्चित्काले तंभट्टकुमारं रहःसमाहूये वक्ष्य- माणवचनं अब्रवीत् ब्रुञ् व्यक्तायां वाचि लङ्. । मिमिति हे द्विजेंद्र ते देवताजनसंभाव्यं वायुना मानितं किंस्वित्प्रमाणं कथितं किं ॥ ४२ ॥ इत्युक्त इति । महीभर्त्री राज्ञा इत्युक्तः स भट्टः न विद्यते शंका विशेषेण यस्मिन् सःतथा अविशंकितः सन् तदस्य संजातं तारकादिभ्य इति सूत्रेण । जाते अर्थे शंकाशब्दस्य । इतश्च हेराजन् वर्णाश्रमोचिताः धर्माः मुमुक्षुभिः मोक्षमिच्छतीति

वेदाःप्रमाणमित्यस्मन्मतं देवानुशिक्षितं । हातव्यं गतिमिच्छद्भिःपुरुषैःसौगतं मतं ॥ ४४ ॥
यदि प्रसीदसि क्ष्मेश सौगतान्विजयामहे । प्रवेशय न चेदस्मान्वन्हावन्हाय निश्चयात् ॥४५॥

मुमुक्षस्थैस्तथा न हातव्याः न त्याज्याः इति सौगतराज आहस्म । ततो ब्रूहस्म । आहसंयाचसंलट् परस्मैपदं ॥ ४३ ॥ पुनःकिमित्याह वेदा इति । हे राजन् वेदाःप्रमाणमिति । देवानुशिक्षितं अस्मन्मतं अस्माकं प्रमाणमिति गतिमिच्छद्भिः पुरुषैः सौगतं मतं बौद्धशास्त्रं हातव्यं त्याज्यं ॥४४॥ यदीति । हे क्ष्मेश हे राजन् यदि त्वं प्रसीदसि तर्हि वयं सौगतान् विजयामहे । अन्हाय द्राक् अव्ययमिं ; न चेत् यदि वयं न विजयामहे । त्वं अस्मान् निश्चयात् वन्हौ प्रवेशय । विश्प्रवेशने लङ्. ॥४५॥ इतीति । इति भट्टवचः-

इति भट्टवचःश्रुत्वा विस्रंभेणाऽब्रवीन्नृपः । यदि जेष्यसि तान्वन्हौ वेशयेसौगतानिति ॥४६॥
तस्य राज्ञो वचःश्रुत्वा विस्रब्धःस महीसुरः । सनारायणभट्टःस शबरो मुमुदे भृशं ॥४७॥

श्रुत्वा विस्रंभेन विश्वासेन भट्टकुमारं अब्रवीत् लड्. । हे भट्टकुमार यदि तान् सौगतान् जेष्यसि । तर्हि अहं वन्हौ प्रवेशये अब्रवीदित्यर्थः । विशप्रवेशनें लडात्मनेपदं उत्तमपुरुषैकवचनम् । ।४६।। तस्येति । स नारायण-भट्टः भट्टनारायणेन शवरेण पित्रा सह वर्तत इति स शबरः स महीसुरः ब्राह्मणःभट्टकुमारःतस्य राज्ञो वचःश्रुत्वा विस्रब्धः सन् भृशं अत्यंतं मुमुदे मुमोद । मुदिहर्षे इति लिट् ।४७। अपक्षेति । स भट्टकुमारः-

अपक्षपातिनि क्षत्रे सटीकां तर्ककर्कशां । चक्रे शबरभाष्यस्य बौद्धशास्त्रनिकृंतनीं ॥४८॥
नारायणेन भट्टेन स कदाचित्समेयिवान् । तोरणाग्रे पुरद्वारि पत्रिकामप्यपातयत ॥४९॥

क्षतात्त्रायत इति क्षत्रः । तस्मिन् लत्रे राज्ञि अपक्षपातिनि सति । पक्षपातोऽस्यास्तीतिपक्षपाती । तस्मिन् तथा बौद्धशास्त्रंनिकृंतनीं बौद्धशात्रं निकृंततीछेत्तीति बौद्धशास्त्रनिकृंतनी बौद्धशास्त्रंनिकृन्ततीति छेत्तीति तां तर्ककर्कशां तर्कैः कर्कशा तर्ककर्कशा तां अनुमानैः में कठिणां शबरभाष्यस्य जैमिनेःसूत्राणां शबरस्य पितुः संबंधिभाष्यस्य टीकां चक्रे । डुकृञ्करणो लिडात्मनेंपदं ।।४८।। नारानणेनेति । भट्टना-रायणेन समेयिवान् युक्तःसन् सकारांतः सः भट्टकुमारःकदाचित् एकदा पुरस्य द्वाः पुरद्वाः तस्यां पुरद्वारि तोरणाग्रे स्तंभाग्रे पत्रिकां अपातयत् । पत्रि कालंबनं चकार सुबुधातुः ।।४९।। वन्हीति । कुमारःवन्हिप्रवे-

वन्हिप्रवेशग्लहया कुमारो वितंडया माध्यमिकान्निगृह्य । नष्टायुषोऽपन्हवते श्रुतीनामन्हाय वन्हौ गमयांचकार ॥५०॥ सायंत्रिकैःसह ययुःकतिचिन्निलीनाःसंप्राप्तंभुक्तिभुवि केचन बक्कमुख्याः ।

वेषांतरेणं कृतसौगतलिंगभंगा राज्यावतर्मसु गताः सुगता विचेरुः ॥५१॥

इतिश्रीमणिमंजर्यां पंचमःसर्गः ॥ ५ ॥

शग्लहया वंन्हिप्रवेशः वन्हिप्रवेशाख्यग्लहे द्यूते स्थातव्यद्रव्यं यस्याःसा तयां त्रितंडाख्यवादेन स्वमतस्थापनं विना परनिराकरणेन माध्यमिकान् जैनान् अन्हाय शीघ्रं निगृह्य विजित्य श्रुतीनां वेदानाम् अपन्हवतेः अपन्हवतः तष्टमायुर्येषां ते नष्टायुषः तान् तथा माध्यमिकान् वन्हौ गमयांचकार प्रापयामास । गम्लृ-गतौ ।।५०।। सायंक्रिकैरिति । कतिचित् कतिचन संप्राप्तभुक्तिभवि संप्राप्ता च सा भुक्तिश्च संप्राप्त-भुक्तिः भूः तस्यां तथा किंचिद्द्विणादिकं गृहीत्वा तंडुलपिष्टादिपाचिकायाः गृहीत इति यावत् । माजभु-क्तिगृहं वा निलीनाःयतः सायंत्रिकै.पोतवणिग्भिःसहयगुः । बक्क मुख्याःबक्काख्यसौगत एव मुख्यो येषां बौध्दानां ते तथा वेषांतरेण अन्यवेषेण कृतसौगतलिंगभंगाः कृतः सौगतानां लिंगस्य चिन्हस्य भंगो येषां ते तथा । केचन राज्यांतवर्मसु स्वराज्यबहिर्मार्गेषु गताःमंतः विचेरुः । चरगतिभक्षणयोर्लिट् । सायंत्रिकः पोतवणिगित्यमरः ।।२१॥ इति श्रीकृष्णार्पमस्तु ।



उदजृंभत वेदांता धर्मा वर्णाश्रमोचिताः । ब्राह्मणास्तुतुषुर्यज्ञाःप्रावर्तंत महीतले ॥ १ ॥
विमृश्य भारविर्भाट्टं समुदासे निरीश्वरं । शुश्रावतन्निराकर्तुं मात्सर्येण प्रभाकरः ॥ २ ॥

उदजृंभतेति । वेदांता वर्णाश्रमोचितधर्माश्च उदजृंभत विस्तृता अभवत् । ब्राह्मणास्तुतुषुःतुष्टाबभूवुः । महीतले ब्राह्मणानामितिशेषः । यज्ञःप्रावर्तंत । जृंभजृंभणे लङ् । तुषतुष्टौपोषणे लिड् । वृतुवर्तने कर्मणि लङ् । ॥ १ ॥ विमृश्येति । भारविःप्रभाकरः निरीश्वरं निराकृत ईश्वरो यस्मिंस्तत् निरीश्वरं भट्टसंबंधिशास्त्रं विमृश्य विचार्य समुदासे उदासयामास । अस उपवेशने लिड् । प्रभाकरः भट्टः तत्तु भाट्टं शास्त्रं मत्सरस्य भावो मात्सर्यं तेन मात्सर्येण निराकर्तुंसुश्राव । श्रुश्रवणे लिड् ।।२।। माघ इति । माघःवररुचिः-

माघो वररुचिर्बाणो मयूरःकालिदासकः । प्रचंडकोविदा दंडिमुख्याश्चैत उदासते ॥ ३ ॥
डंबकस्तर्कवितंत्री प्रभाकृत्तर्कतंत्रवित् । मंडनो रेफणश्चैते भट्टाद्भाट्टमशृण्वत ॥४॥

बाणःमयूर कालिदासकःदंडिरेव मुख्यो येषां ते दंडिमुख्याःप्रचंडाः उत्कृष्टाश्चते कोविदाश्च प्रचंडकोविदा एते भट्टमिति पूर्वपरामर्शः उदासते । अस उपवेशनें लडात्मनेपदंबहुवचनं । विद्वान्विपश्चिद्दोषज्ञः सन् सुधीः कोविदो बुध इत्यमरः ॥ ३ ॥ डंबकइति । तंत्री सिद्धांती तर्कं वेत्तीति तर्कवित् । दकारांत डंबकइति कश्चित् तर्कशास्त्रस्य तंत्रं सिद्धातं पूर्वमीमांसेतियावत् । तच्छास्त्रंवेत्तीति तर्कतंत्रवित् । प्रभाकृत्प्रभाकरः मंडनोमंडनमिश्रः रेफणश्चैवभट्टात्भटकुमारात् भाट्टंभट्टकुमारसंबंधिशास्त्रं अशृण्वत । लडात्मनेपदं तंत्रं

म.म. ८८

मा. ३

ततः प्राभाकरं चक्रे व्यर्थयुक्तिः प्रभाकरः। भट्टसंरब्धमात्सर्यो बहुतंत्रप्रपंचनं ॥५॥
तमेवसमयं दैत्यो मणिमानप्यजायत। मनोरथेन महता ब्राह्मण्यां जारतःखलात् ॥६॥

प्रधाने सिध्दांते तंतुवायें परिच्छद इत्यमरः ॥४॥ ततइति। ततःभाट्टशास्त्रश्रवणानंतरं व्यर्थयुक्तिः व्यर्था युक्तिर्यस्यसः भट्टे संरब्धं कृतं मात्सर्यं येन स तथा बहुतंत्रप्रपंचनं बहुतंत्राणि प्रपंचयति विस्तारयतीति तथा। प्राभाकरं प्रभाकरशास्त्रं चक्रे ॥५॥ तमेवेति। तमेव ममयं कालं तस्मिन्नेव कालइत्यर्थः। महता मनोरथेन दैत्यो मणिमानपि दुर्जनात् जारतः कामुकपुरुषात् ब्राह्मण्यां विधवायां अजायत। जनी प्रादुर्भावे गोलकोऽभवत्। अमृते जारजः कुंडो मृतेभर्तरिगोलक इत्यमरः। समयः शपथाचारः कालसिद्धांतिनं विदुः। तेषां मध्ये संकरस्तु पूर्वं यो मणिमान्खलः। कालडीग्रामजो रुद्रवराल्लोकान्विमोहयन्नितिस्कंद

उत्पन्नःसंकरात्मायं सर्वकर्मबहिष्कृतः। इत्युक्तः स्वजनैर्माता संकरेत्याजुहाव तं ॥७॥
विश्वस्ता स्वसुतं दृष्ट्वा तुष्टा सा पोषयत्क्रमात्। मंडो दुंबरनिष्पावैःशिग्रशाकैरलांबुभिः ॥८॥

पुराणवचनात्। उत्पन्नइति। उत्पन्नःजातःअयं संकरात्मा। संकरोवकरस्तथा। संमार्जनी शोधनी स्यादित्यमरः। एकीकृतरजोनामा आत्मा स्वरूपं यस्य स तथा। सर्वकर्मबहिष्कृतः जातकर्मादिरहित इतियावत्। स्वजनैः उक्तः कारकपदं। माता तं संकरेत्याजुहाव। जुहआव्हाने लिट् परस्मैपदं ॥७॥ विश्वस्तेति। विश्वस्ता विधवा सा सुतं दृष्वा तुष्टा सती मंडोदुंबरनिष्पावैः द्वंद्वः शिग्रशाकैः अलांबुभिः। क्रमादपोषयत्

पुषपुष्टौ लङ् परस्मैपदं । विश्वस्ताविधवासमेत्यमरः । ॥८॥ पंचेति । संकरत्वं पंचषाणि पंच षड्वा

पंचषाण्यानयक्षिप्रं वृंताकानीति चोदितः । मात्रा संजग्मिवान्बालो वृंताकस्तंबसंचयं ॥९॥
गणयामास वृंताकमेकमेकमिति स्फुटं । एकत्वसंख्यया चात्र न द्वितीयमवैक्षत ॥१०॥

पंचषाणि तानि तथा वृंताकानि क्षिप्रं आनयेति मात्रा चोदितः प्रेरितः सन् बालःसंकरः वृंताकस्तंबसंचयं समूहं जग्मिवान् प्राप कारकपदं । गिञ्‍ प्रापणे लोट् परस्मैपदं ॥९॥ गणयामासेति । स संकरःवृंताकानि स्फुट स्वच्छं यथाभवतितथा । एकमेकमितिगणयामास । एकत्वसंख्याया एकत्वेति संख्या तयात्र वृंताकेषु द्वितीयं द्वित्वसंख्यानावैक्षत । चक्षदर्शनांकनयोर्लङ.ात्मनेपदं ॥१०॥ तदेति । पुत्रःमातरं तदा तस्मि-

तदाह मातरं पुत्रो नेक्षे वृंताकयोर्द्वयं । पंचषाणि कतं तानि त्वानयेयं तरामिति ॥११॥
पथिकास्तदुपश्रुत्य प्रहस्य मिथ ऊचिरे । एकस्मिन् द्वित्वसंख्यां तु कःपश्यतितरामिति ॥१२॥

न्काले वृंताकयोर्द्वयोर्मध्ये द्वयं अहं नेक्षे । न ईक्षे इति पदच्छेदः । पंचषाणि तानि वृन्ताकानि तु कथंतरां केन प्रकारेणानयेयमित्याह । विधि लिङ् परस्मैपदं ॥११॥ पथिका इति । पथिका मार्गस्थाःतत् संकरभाषितं वचनमुपश्रुत्य प्रहस्य कःएकस्मिन् वस्तुनि द्वित्वसंख्यातितरां अत्यंतं अन्यायमिदं पश्यति । मिथः परस्परं ऊचिरे । बचनपरिभाषणे लिडात्मनेपदि बहुवचनं ॥१२॥ उपनीयेति । कश्चित् द्विजः संकरं उपनीय

उपनीय द्विजःकश्चिद्वाचाटं निपुणं वटुं । सुभिक्षान्नघृतक्षीरं सौराष्ट्रमनयत्ततः ॥१३॥
प्राग्भवे सुचिरं चीर्णतपस्तुष्टस्य शूलिनः । वरप्रसादतः शीघ्रमध्यगीष्टागमान्वटुः ॥१४॥

उपनयनं कृत्वा ततः वाचाटं वाग्मिनं अतिनिपुणं कुशलं वटुं ब्रह्मचारिणं सुभिक्षान्नघृतक्षीरं शोभनानि भिक्षान्नघृतक्षीराणि यस्मिंस्तथा सौराष्ट्रदेशं अनयत् । नीञ् प्रापणेद्विकर्मकत्वे लङ् परस्मैपदं ।। १३ ।। प्राग्भव इति । वटुर्ब्रह्मचारी प्राग्भवे पूर्वजन्मनि सुचिरं बहुकालं चीर्णतपस्तुष्टस्य चीर्णेन तपसा तुष्टस्य शूलिनः शूलमस्यास्तीतिशूली तस्य महारुद्रस्य वरप्रसादतः वरस्य प्रसादः तस्मात्तथानुग्रहात् शीघ्रं आगमान् अध्यगीष्ट पपाठ । इष्टमध्ययने अधीत्युपसर्गः ।।१४।। ततइति । सःसंकरः ततः सौराष्ट्रदेशात्

ततःसौमीं दिशं यातो नदीं तर्तुमवातरत् । तस्या ओघैर्हृते ब्रह्मसूत्रे तामुत्ततार सः ॥१५॥
मां त्वं त्यजसि चेत्सूत्र त्वां प्रागेवाहमत्यजं । अकर्मणस्त्वया किं मइत्युक्तः स ययौ द्रुतं ॥१६॥

सौमीं सोमस्य चंद्रस्य संबंधिनीं दिशं उत्तरामितियावत् । यातः सन् कांचननाम्नीं नदीं तर्तुं अवातरत् प्रवेश यामास । तस्याः नद्याः ओघैः प्रवाहैः ब्रम्हसूत्रे यज्ञोपवीते हृते सति तां नदीं उत्ततार । तॄप्लवनतरणयो- र्लिट्परस्मैपदं ।१५। मामिति । हे सूत्र यज्ञोपवीत त्वं मां त्यजसि चेत् तर्हि अहं त्वां प्रागेव पूर्वमेवात्यजं । अकर्मणः न विद्यते कर्म यस्य सः मम तस्य मे त्वया किमपि प्रयोजनं नास्ति । इत्युक्त्वा स संकरः द्रुतं शीघ्रं ययौ । त्यजहानौलिट् । अत्यज त्यजत्यागे लङ् । परस्मैपदं उत्तमपुरुषः ।। १६ ।। दुर्वासस इति

दुर्वाससःपरं शिष्यं परतीर्थाभिधं यतिं । चातुर्मास्यव्रतधरमपश्यत्कापटो वटुः ॥१७॥
निःसूत्रं तं वटुं दृष्ट्वा महादानवलक्षणं। विद्वानवाङ्मुखो भूत्वा स आचम्य मठं ययौ ॥१८॥
दोषज्ञं तं मुनिं ज्ञात्वा तीर्त्वा गोदावरीं ययौ। बदर्यां परतीर्थार्यशिष्यं प्राप्येदमब्रवीत् ॥१९॥

कापटः कुत्सितः पटो यस्य सःबटुःसंकरः अत्रिपुत्रस्य परं मुख्यं शिष्यं चातुर्मास्यव्रतधरं चतुर्णां मासानां संबंधीनि व्रतानि धरतीथितथा । परतीर्थाभिधं परतीर्थ इत्यभिधा यस्य स तं यतिं अपश्यत् दृशिरप्रेक्षणे लिङ्.परस्मैपदं ।। १७ ।। निःसूत्रमिति । विद्वान् सःपरतीर्थः महादानवलक्षणं महांति दानवानां लक्षणानि यस्निन्सः । निःसूत्रं निर्गतं यज्ञोपवीतं यस्मिन्सः । तं वटुं संकरं दृष्वा अवाङ्.मुखः सन् अवाङ्. अधःमुखं यस्य सःतथाभूत्वा आचम्य आचमनं कृत्वा मठं ययौ । मठच्छात्रादिनिलय इत्यमरः । याप्रापणे लिट् परस्मैपदं ।।१८।। दोषज्ञमिति । संकरःतं मुनिं परतीर्थं दोषज्ञं ज्ञात्वा गोदावरीं तीर्त्वाययौ । बदरिकाश्रमे परतीर्थार्यशिष्यः तं प्राज्ञं प्राप्य इदं वक्ष्यमाणं वचोऽब्रवीत् ब्रुञ्.व्यक्तायां वाचि । लुङ्.परस्मैपदं ।।१९।। किमित्याह त्वदिति । अहं त्वद्गुरोः तवगुरुः त्वद्गुरुः तस्य शिष्योऽस्मि तदादेशात् तस्य आदेशात्

त्वद्गुरोरस्मिशिष्योहं तदादेशादिहागतः। इत्युक्तवति तस्मिन् स विस्रंभं नैव जग्मिवान् ॥२०॥
सत्यप्राज्ञो वटुं भक्तिवैराग्यादिगुणोज्झितं । दुष्टं विज्ञाय तत्याज जुगुप्सां परमां गतः ॥१२॥

आज्ञायाः बदर्यां आगत इति कारकपदं । तस्मिन्संकरे उक्तवाति सति सत्यप्रज्ञ विस्रंभं विश्वासं न

जाग्मित्रान् न ययावित्यर्थः। कारकपदमेतत् ।।२०।। सत्यप्रज्ञ इति । सत्यप्रज्ञःभक्तिवैराग्यादिगुणोज्झितं भक्तिवैराग्ये एवादिर्येषां ते भक्तिवैराग्यादयः ते च ते गुणाश्च तेभ्य उज्झितः रहितः तं तथा वटुं संकरं दुष्टमिति विज्ञाय तत्याज । त्यजवयोहानौ लिट् । परमां जुगुप्सां कश्मलमागतः कारकपदं ।। २१ ।।

अतीतजन्मसंस्कारवशादैकात्म्यभावनां । चकार शून्यभावेन निर्गुणत्वेन वा क्वचित् ॥२२॥
सहायं मार्गयामास दुष्टपक्षैकदीक्षितः । एकाकी मलिनो मुंडस्तत्र तत्र परिभ्रमन् ॥ २३ ॥

अतीतेति । संकरः अतीतजन्मसंस्कारवशात् अतीतजन्मनः गतजन्मनः संस्कारवशात् शून्यभावेन शून्यतत्वेन क्वचित् निर्गुणत्वेन वा । ऐकात्म्यभावनां ऐक्योपासनां चकार । डुकृञ् करणे लिट् परस्मैपदं ।।२२।। सहायमिति । दुष्टपक्षैकदीक्षितः दुष्टानां पक्षे एका मुख्या जाता दीक्षा यस्य स तथा । तस्य संजाता तारकादिभ्यरुशएकः चरतीति एकाकी मलिनः मली मुंडःसंकरः तत्र तत्र तस्मिन् देशे परिभ्रमन् संचरन् सहायं मार्गयामास ।मलमस्यास्तीति मली स तथा मलिनः । कच्चरंमलदूषितमित्यमरः ।२३। कदाचिदिति ।

कदाचिन्निशि संगत्य दैत्यास्तं समभावयन् । ऊचुश्च संकराचार्य त्वमस्माकं परा गतिः ॥२४॥
तुभ्यं मनस्विने भूयःस्वस्तिपादतलोटज । साधकं प्रत्ययामस्त्वामासुर्याः कार्यसंपदः ॥२५॥

दैत्याःदितेरपत्यानि पुमांसःअसुराःकदाचिन्निशि रात्रौ तं संकरं संगत्य एत्य समभावयन् सम्यक् मानयन् लङ् परस्मैपदं । हे संकराचार्य त्वं अस्माकं परा मुख्या गतिरिति ऊचुः । वचपरिभाषणे लिट् परस्मैपदं ।२४।

तुभ्यमिति । हे संकराचार्य तुभ्यं नमः । पादतलोटज अपभ्रष्टभाषायां कालडीग्रामजमनस्विने भूयः महत्स्वस्ति वयं आसुर्याः असुराणां संबंधिन्यः संपदःऐश्वर्यस्य साधकं प्रत्ययामः विज्ञापयामः । लट् परस्मैपदमुत्तमपुरुषैकवचनं । इत्यतःपरश्लोकान् संकरं प्रति दैत्याः स्वसंप्रदायसूचनार्थमूचुः ।। २५ ।। पुरा पूर्वं

पुरा भट्टभयाच्छाक्या नष्टा द्वीपांतरं गताः। नारायणोऽन्वगात्तेषां ततोप्युत्सादनेच्छया ॥२६॥
ता उत्साद्य तान् भट्टआयातमनुजं निजं । दुष्टदेशे चिरावासान्नग्रहीद्दोषशंकया ॥२७॥

भट्टभय । त् भट्टकुमारस्य भयात् शाक्याःबौद्धाःक्षीणाःसंतः अन्यद्वीपं द्वीपांतरं गताः कारकपदं । नारायणोपि भट्टनारायणः नाशेच्छयान्वगात् । इण्गतौ लिंट् । ताननुययौ ।।२६।। तत इति । भट्टःकुमारः ततः तान् शाक्यान् उत्साद्य नाशयित्वा आयांतं अनुजं नारायणभट्टं दुष्टदेशे स्थितं चिरावासात् बहुकालवासात् दोषशंकया नाग्रहीत् । ग्रहउपादने । ।। २७ ।। तत इति । स नारायणभट्टः ततः अपरिग्रहणात् सौगतमतं

ततःस सौगतमतं पुनःकिंचिदुदग्रहीत्। बक्कस्वामी ततो द्वीपादाजगामातिशंकितः ॥२८॥
कुमारःस्वमृतिं लोके ख्यापयामास शिष्यकैः। नारायणस्तु तच्छ्रुत्वा शोकात्पावकमाविशत् ॥२९॥

बौद्धशास्त्रं किंचित् उदग्रहीत् उद्दधार । ततःतदुद्धरणकारणात् बक्कस्वामी द्वीपादशंकितःसन् अत्यंतं संजातशंका यस्य स तथा आजगाम । गम्लृगतौ लिट् परस्मैपदं ।।२८।। कुमार इति । स कुमारः शिष्यकैर्जनैः स्वस्य मृतिः स्वमृतिःतां लोके ख्यापयामास । प्रसिद्धिं चकार । नारायणस्तु तत् भट्टकुमारमृतिवचनं श्रुत्वा

शोकात्पावकं अग्निं आविशत् । विशप्रवेशने लङ्. परस्मैपदं । लोकस्तु भवने जन इत्यमरः । अयं भावः अनुजेन उद्धृतं मतं निराकर्तुमशक्यमिति । स्वयं लीनःसन् एवं चकारेत्यर्थः ।।२९।। आपणेष्विति । बक्कः

**आपणेषु ततो बक्कःप्रावर्तयत सौगतं । मतं लिंगांतरधरैर्जनैः केरलजन्मभिः ॥३०॥**
**गौडपादस्ततो न्यासमियेष प्रवयास्तदा । तच्छ्रुत्वा यतिरूपेण बक्को गत्वा तमब्रवीत् ॥३१॥**

बक्कनामा बौद्धः ततःतन्मृतिकारणात् केरलजन्मभिःकेरलदेशे जन्म येषां ते तैर्लिंगांतरधरैः अन्यो लिंगः लिंगांतरं धरतीति लिंगांतरधराः तैस्तथा सौगतैरित्यर्थः । जनैरापणेषु पुण्यवीथिषु सौगतमतं बौद्धशास्त्रं प्रावर्तयत । वृतुवर्तने लङ्. आत्मनेपदं ।। ३० ।। गौडेति । तदा तस्मिन्काले प्रवयोवृद्धःगौडाख्यो ब्राह्मणः न्यासं संन्यासं इयेष इषु इच्छायां लोट् । ततोऽनंतरं बक्कः तत् गौडमनोभिप्रायवचनं श्रुत्वा यतिरूपेण संन्यासरूपेण तं गौडपादं प्रति अब्रवीत् । ब्रुञ्व्यक्तायां वाचि लुङ्. ।।३१।। किमित्यब्रूत इत्यत आह

**सनत्कुमारो भगवान् प्रेषयामास मां तव । मोक्षप्रवर्तनायैव द्वैतभावेन किं फलं ॥३२॥**
**इत्युक्तो गौडपादस्तु संभ्रमेण ननाम तं । विप्रस्तुर्याश्रमं प्राप्य तत्वं शुश्राव बक्कतः ॥३३॥**

सनत्कुमारेति । भगवान् सनत्कुमारःमां तव मोक्षप्रपर्तनाय संन्यासप्रवर्तनायैव प्रेषयामास । द्वैतभावेन किं फलं किमपि नास्तीत्यर्थः । असभुवि लिट् ।।३२।। इतीति । विप्रःगौडपादस्तु बक्केन युक्तः सन् संभ्रमेण

हर्षेण तं ननाम । बक्कत:बक्कात् तुर्याश्रमं संन्यासाश्रमं प्राप्य तत्वं बौद्धशास्त्रं शुश्राव । णमुप्रव्हत्वे शब्दे च श्रुश्रवणे लिट् । संभ्रमवेगयोरिति ॥३३॥ श्लोकद्वयेन बौद्धशास्त्रपरमरहस्यं तदिति । तस्मिन् शून्ये

तद्विवर्तप्रपंचोऽयं बाध्यते ज्ञानसंपदि । ज्ञानं तु तप्तलोहाप्तजलन्यायेन शाम्यति ॥३४॥

यथा प्रत्याययत्येते सर्वं बाधोपलक्षणं । ततस्त्वमन्यथा तत्वं सोऽहमित्यूहमर्हसि ॥३५॥

ब्रह्मणि त्रिवर्त: आरोपित इति यावत् । अयं प्रपंचो जीवात् ज्ञानसंपदि सत्यां बाध्यते लोडचते । बाधृ विलोडन इति व्याख्यानात्कर्मणि लिट् । तप्तलोहाप्तजलन्यायेन तप्तश्चासौ लोहश्च तप्तलोह:तस्मिन् आप्तं च तत् जलं च तप्तलोहाप्तजलन्यायेन शाम्यति । शांतो भवति शमशांतौ लिंट् ॥३४॥ यथेति बाधोपलणं बाध एव लक्षणं यस्य ततथा । एतत्सर्वं जगत् यथा कथं प्रत्याययति विश्वासयति । ततस्तु तस्मात्काणात् एवं यथोक्तरहस्यं अन्यथा यथार्थं न भवति । सोऽहमित्यूहं संभावनामर्हसि । अर्हपूजायां लट् मरस्मैपदं । मध्यमपुरुषैकवचनं । सोऽहमित्युपासांकुर्वित्यर्थः ॥३५॥ इतीति ! द्विज: गौडपाद:इति बक्कोदितं बौद्धशास्त्रं

इति बक्कोदितं तत्वं विचार्य सुचिरं द्विजः । सर्वभावं निर्विशेषं विना नान्यदवैक्षत ॥३६॥

गोविंदस्तं समासाद्य ततःसंन्यासमाचरत् । संप्रदायगतं तत्वं श्रुत्वोपास्त यथार्थतः ॥३७॥

सुचिरं बहुकालं विचार्य निर्विशेषं न विद्यते विशेषो यस्मिन् स तथा । सर्वभावं सर्वस्य जगतः मिथ्यात्वं विना ऋते अन्यदपरं भावं नावैक्षत । ईक्षदर्शनांकनयोर्लिट् आत्मनेपदं ॥३६ ॥ गोविंद इति । गोविंद:

शबरपिता गोविंदभट्टः तं गौडपादं समासाद्य ततःगौडपादात् संन्यासमाचरत् जग्राह। चरगतिभक्षणयोर्लङ् परस्मैपदि । संप्रदायगतं संप्रदायपरंपरयागतं तत्वं यथार्थतः उपास्ते सोऽहमित्युपासयामास आस उपवेशने लङ् आत्मनेपदं ॥३७॥ इति दैत्याः संप्रदायं ज्ञापयित्वा पुनः संकरमाह गोविंदेति । भो अव्ययं भो संकर

गोविंदस्वामिनं साधुं तं गुरुं समुपैहि भो। ततो दंडादिकं प्राप्य शृणु त्वं तत्वमुत्तमं ॥३८॥
मनःप्रविश्य सर्वेषां त्वा वयं रोचयामहे। विष्णोर्विदूषय गुणानित्युक्त्वा ययुरासुराः ॥३९॥

त्वं साधुंनिर्दुष्टंतं गोविंदस्वामिनं गुरुमिति समुपैहि । ततःगोविंदस्वामिनःसकाशात् दंडादिकं प्राप्य तस्मादुत्तमं तत्वं शृणु । इण्गतौ श्रु श्रवणे परस्मैपदि लिट् । मध्यमपुरुषैकवचनं ॥३८॥ मन इति । हे संकर वयं सर्वेषां सज्जनानां मनःप्रविश्य रोचयामहे । रुचिरदीप्तौ लड्. आत्मनेपदं । त्वं विष्णोर्गुणान् विदूषय इत्युक्त्वा ययुः । दूषदूषणे लोडात्मनेपदं मध्ययपुरुषः ॥ ३९॥ वटुरिति । शठःखलःवटुःसंकरःगोविंदस्वा-

वटुःशठःस गोविंदस्वामिनं प्रैक्षत क्वचित् । भूयासं भवतःशिष्यो न मेन्यस्त्वादृशो गुरुः ॥४०॥
इत्यूचिवांसं गोविंदःस तं पर्यग्रहीद्रुतं। प्रच्छाद्य शून्यवादित्वं वेदांतिव्यपदेशतः ॥ ४१ ॥

मिनं क्कचित् प्रैक्षत । गोविंदस्वामिन् अहं तव शिष्यो भूयासं भवानि । त्वादृशःत्वत्सदृशः अन्यो गुरुः मे नास्तीत्यर्थः । भूप्राप्तावाशीर्लिङ्. आत्मनेपदं उत्तमपुरुषः ॥४०॥ इतीति । गोविंदःइत्यूचिवांसं तं संकरं

इति कथं गोविंदस्वामिन् संकरः
द्रुतं पर्यग्रहीत् । ग्रहउपादाने लङ् । गुरुं संमंत्र्य सुहृदयं शृणोमीत्याह । इति कथं गोविंदस्वामिन् संकरः शून्यवादित्वं शून्यं वेदांतिव्यपदेशःवेदेभ्यः शास्त्रेभ्यःनिर्णयोऽस्यास्तीति वेदांती सएव व्याजः तस्य तत्तथा । शून्यवादित्वं शून्यं वदतीति शून्यवादी तस्य भावः शून्यवादित्वं । प्रतिष्ठाप्य संगृह्य अहं तव शिष्यो भवामीति वदंतमिति भावः ॥४१॥ वर्तयाम इति । स्वीयं स्वकीयं मतं शास्त्रं वर्तयामः । एवं चेत् न गर्हयंति । तदर्थं अहं

वर्तयामो मतं स्वीयमन्यथा गर्हयंति नः । तदर्थं सूत्रहृदयं ब्रह्मदत्ताच्छृणोम्यहं ॥४२॥
इति गोविंदमाभाष्य मायि सिद्धांतिनं ययौ । प्रभाकरकुमाराभ्यां साकं भास्करसंयुतः ॥४३॥

ब्रम्हदत्ताख्यत्रिदंडिसंन्यासिनः सकाशात् सूत्राप्राभियं शृणोमि । वृतुवर्तने गर्हनिंदायां । श्रुश्रवणे । एते परस्मैपदिनः ॥ ४२ ॥ इतीति । मायी मंकरःइति गोविंदमाभाष्य । प्रभाकरभट्टकुमाराभ्यां साकं भास्करसंयुतःसन् सिद्धांतिनं ब्रह्मदत्तं प्रति ययौ लिट् परस्मैपदं ॥ ४३ ॥ शुश्रावेति । सःप्रभाकरसहितःसन् सः

शुश्राव सूत्रभावं स ब्रह्मदत्तात्त्रिदंडिनः । शिष्यास्ते प्रययुः सर्वे विभिन्नमतयो मिथः ॥४४॥
भाट्टं शिष्येषु विन्यस्य भट्टो दैवमसेवत । गुरुःप्राभाकरं तेने भास्वेरनुजः शठः ॥४५॥

संकरःत्रिदंडिनः ब्रह्मदत्तात् सूत्रभावं ब्रह्मसूत्राभिप्रायं शुश्राव । ते सर्वे शिष्याःमिथः परस्परं विशेषेण भिन्ना मतिर्येषां ते विभिन्नमतयःसंतः प्रययुः प्रेत्युपसर्गः । या प्रापणे लिट् परस्मैपदं ॥ ४४ ॥ भाट्टमिति । भाट्टं

म.म. ३३

सूत्रैः प्रपंचयांचक्रे मायावी सौगतं मतं। शून्यं ब्रह्मपदेनोक्त्वा तथा विद्येति संवृतिं ॥४६॥
सत्वादिधर्मराहित्यं शून्यतायै जगाद सः । सूत्रमुद्धृत्य सिद्धांतमुत्सूत्रैः स्वीयमुच्चकैः ॥४७॥

भट्टसंबंधिशास्त्रं भट्टःभट्टकुमारः शिष्येषु विन्यस्य दैवतं असेवत इति यावत्। भारवेः अनुजःशठःगुरुःप्राभाकरं शास्त्रं तेने विस्तारयामास । सिञ् सेवायां लङ् आत्मनेपदं । तनुविस्तारे लट् ॥४५॥ त्रैरिति । सू मायावी माया अस्यास्तीति अस्यार्थे इनि । संकरःशून्यं शून्यपदार्थं ब्रम्हपदेन संवृतिं संवृतिशब्दार्थं अविद्येति पदेनोक्त्वा सूत्रैःसौगतं बुद्धसंबंधिमतं शास्त्रं प्रपचयांचके। विस्तारं चक्रे । डुकृञ् करणे ॥४६॥ पुनस्तद्वीवरणमाह सत्वेति । स्वीयं स्वकीयं सिद्धांतं ब्रह्मसूत्रमृद्धृत्य उत्सृज्य सूत्रमतिक्रांतैःशब्दैःउच्चकैः क्रियाविशेषणं शून्यतायै शून्यतत्वार्थसिद्धये ब्रह्मणःसत्वादिराहित्यं सत्वमेवादिर्येषां ते सत्वादयः ते च ते धर्माश्च तैः रहितस्य भावो सत्वादिधर्मराहित्यं तत्तथा जगाद । गदव्यक्तायां वाचि । ब्रम्हसूत्राणां भाष्यं चकारेत्यर्थः । सदृशं त्रिषुलिंगेषुसर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्नव्येति तदव्ययं ॥४७॥ वेदांतशब्दस्य विवरणमाह आभा

आभाष्य बहुभिः शब्दैःकथं वेदांतितामियात् । अतत्वावेदकाःप्रायो वेदाःकेचिन्निरर्थकाः ॥४८॥
इति वेदांतवादःस्यात्कथं वादस्तदंतकः । कर्णौप्यधत्त सिद्धांती भाष्यं तच्छुश्रुवान्मनाक् ॥४९॥

ष्येति । बहुभिःशब्दैःआभाष्य जनःकथं वेदांतितां वेदांतिनो भावः वेदांतिता तां तथेति यावत् इणगतौ आशीलिङ् परस्मैपदं ॥४८॥ कुत इत्यत आह । इतीति । वेदाः क्वचिदतत्वावेदकाः अयथार्थं प्रतिपादका प्रायः

निरर्थकाः इत्येवं प्रकारेण वेदांतवादःप्रसिद्धः तदंतकः तेषां वेदानां अंतकः नाशकः वादःकेन प्रकारेण स्या- दित्यर्थः । असभुवि आशीर्लिङ्. परस्मैपदं । सिद्धांती ब्रह्मदत्तः ब्रम्हसूत्राणां संकरभाष्यनामकं अल्पं शुश्रुवान्। सकारांतः कर्णौ श्रवणेप्यधत्त पिधयामास । अपीत्युपसर्गः अपीत्युपसर्गस्य अकारलोपः । तस्य संमतिः वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः । टापंचैव हलंतानां यथावाचा निशादिशा । अपिधानतिरोधान पिधानाच्छादनानि चेत्यादिप्रयोगदर्शनात् । डुधाञ् धारणपोषणयोर्लडात्मनेपदं ॥ ४९ ॥ भास्कर

भास्करःकर्कशैस्तर्कैर्भदुर्भाष्यं तदखंडयत् । दुःशास्त्रमपठन दैत्यास्तत एवहरिद्विषः । असुरावेशिनःसर्वे संकरस्य वशं गताः ॥ ५० ॥

वशो चिकीर्षुर्निखिलांश्च जंतून् सवर्त्मबाह्यानपि हंतुमिच्छन् । शाक्तेयमंत्रानभजत्समायी सा भैरवी तस्य चकार दौत्यं ॥५१॥ इतिश्रीमत्कविकुलतिलकत्रिविक्रमपंडिताचार्यसुतनारायणपंडिताचार्य विरचितमणिमञ्जर्यां षष्ठःसर्गः ॥ ६ ॥ श्रीकृष्णार्पणमस्तु ॥

इति । भास्करस्तार्किकः कर्कशैस्तर्कैः अनुमानैर्दुर्भाष्यं संकरभाष्यं अखंडयत् खंडयामास । खंडखंडने लङ्. परस्मैपदं । कर्कशं कठिणं क्रूरं कठोरं दुष्टनिष्टुर इत्यमरः । यस्मात्कारणात् श्रीविष्णोःद्वेषिणः तत एव तस्मात्कारणात् एवं दैत्याःदुःशास्त्रमपठन् । सज्जनाः असुरावेशिनःसंतः संकरस्य वशं गताः कारकपदं पठ-

म.मं. ३८

सर्गः ७

पठनेलड. ।।५०।। वशीति । निखिलान् जंतून् वशीचिकीर्षुः न वशाः अवशाः वशत्वेन संपाद्यमानास्तथाकृता इति स तथेति अभूत् । अभूतद्भावे च्विः । सवत्मंब्राह्मान् हंतुमिच्छन् मायी मिथ्यावादी संकरः शाक्तेय-मंत्रान् शक्ते भारव्यासंबंधिनःशाक्तेयाः ते च ते मंत्राश्च तांस्तथा अभजत् । साभैरव्याशक्तिः तस्य संकरस्य भावो दौत्यं तत्तथा दूतत्वं चकार । डुकृञ् करणे लिट् । भज सेवायां लड्.परस्मैपदं ।।५१।। इतिश्रीमत्क-विकुलतिलकत्रिविक्रमपंडिताचार्यसुतनारायणपंडिताचार्य विरचितमणिमंजरीटीकायां षष्ठःसर्गः समाप्तः



श्री । अथास्मिन्सर्गे संकरकृतव्यापारमाह तत इति । ततःअनंतरं स संकरःविश्वरूपस्य विश्वरूपाख्यब्राह्मणस्य गृहं गेहं वव्राज प्राप व्रजगतौ कर्तरि लिट् । परस्मैपदं । अमुना संकरेण अपांगवीक्षया नेत्रांतस्य वीक्षया दर्शनेन किमपि केन प्रकारेण तत्प्रिया तस्य विश्वरूपाय प्रिया भार्या अबोध्यत प्रेरयामास । बुधअवगमे कर्मणि लडात्मनेपदं । अयं भावःकिमपि अनेन प्रासादग्रे स्थिता विश्वरूपस्य भार्या संकरं दृष्टवा तस्यापांगेन वीक्षिता सती कामार्ताऽभवदिति ।१।। जघटात इति । तयोःविश्वरूपभार्यासंकरयोःचेतसी मनसी मंक्षु शीघ्रं

ततः स विश्वरूपस्य ग्रहं वव्राज संकरः। किमप्यबोधतापांगवीक्षया तत्प्रियाऽमुना ॥ १ ॥
जघटाते तयोर्मंक्षु चेतसी त्वितरेतरं। निलीनोऽध्वनयद्भिक्षुर्निशीथे प्रांगणाद्बहिः ॥ २ ॥

इतरेतरं परस्परं जघटाते संबंधमभवतां घटमंघटने कर्तरि लिडात्मनेपदं। प्रथमपुरुषद्विवचनं। भिक्षुःसंन्यासी संकरःनिशीथे अर्धरात्रे प्रांगणात् चत्वरात् बहिः बाह्यभागे निलीनःगूढः सन् अध्वनयत् संज्ञाध्वनिं चकार। ध्वनशब्दे कर्तरि लङ् परस्मैपदं ॥२॥ तया विश्वरूपभार्यया निजभर्तरि निजे स्वकीये भर्तरि पत्यौ किंचि-

निर्ययेऽकालकूश्मांडपातकातरया किल । तया किंचित्परिगते निद्रया निजभर्तरि ॥ ३ ॥
बृहत्तमोद्धतांगेन स्फारस्फिङ्मसृणत्वचा । तेन दुर्भिक्षुणोत्तुंगजघनस्तनयारमि ॥ ४ ॥

दल्पनिद्रया परिगते सति ग्रस्ते सति । अकालकूश्मांडपातकातरया अकाले कूश्मांडस्य पतनविषये कातरो चंचलो यस्याःसा तया निर्यये निःसरणमभवत् । भावे लडात्मनेपदं । प्रथमपुरुषैकवचनं भावार्थस्य एकरूपत्वात् । पुरुषवचनांतरापेक्षया कूश्मांडःपतित इति मृषां व्याजेनेति भावः ॥३॥ बृहदिति । उत्तुंगजघनौ कटिप्रदेशौ च स्तनौ कुचौ च जघनस्तनौ च उत्तुंगौ उन्नतौजघनस्तनौ यस्याः सा तथा तया विश्वरूपभार्यया बृहत्तमोद्धतांगेन बृहत्तमानि अत्यंतं बृहति उद्धतानि पुष्टानि अंगान्यवयवानि यस्य स तथा । तेन स्फारस्फिङ्मसृणत्वचास्फारे स्फुरंतौ स्फिक् कटी यस्य स्फारस्फिङ्मसृणा चिक्कणा त्वक् चर्म यस्य मसृणत्वक् स्फारस्फिक् चासौ मसृणत्वक्च । तेन तथा दुर्भिक्षुणा दुष्टसंन्यासिना तेन संकरेण अरमि क्रीडनमभवत् । रमुक्रीडायांभावे लङात्मनेपदं । भावार्थस्य एकवचनत्वान्नपुरुषवचनादिकं । चिक्कणं मसृणं स्निग्धमित्यमरः । स्त्रियां स्फिचौ कटिप्रोथावित्यमरः ॥४॥ पत्युरिति । नारी विश्वरूपस्य भार्या शनैःमंदं एत्य उपेत्य

पत्युरेत्यं शनैर्नारी समीपेऽशेतविक्लवा। कूश्मांडकथया चैनं प्रबुध्यतमबोधयत् ॥ ५ ॥
ततःप्रातर्विवादेच्छुःसंकरो विप्रमब्रवीत्। जल्पावःप्राश्निकत्वेऽसौ कल्प्यतां दयिता तव ॥ ६ ॥

विक्लवा सती विह्वला सती। पत्युःविश्वरूपस्य समीपे अशेत शयनमकरोत्। शीङ्.स्वप्ने कर्तरि लिङ.त्मनेपदं। प्रबुध्यतं विगतनिद्रं एनं पतिकूश्मांडकथया मृषा मंडपोपरि स्थितं कूश्मांडफलं काले पतितमिति कथया वार्तया अबोधयत् बोधयामास। बुधअवगमे कर्तरि लिङ्. परस्मैपदं ।।५।। तत इति। ततःअनंतरं प्रातःप्रातःकाले विवादेच्छुःविशेषेण वा प्रसंगं कर्तुमिच्छुः संकरःविप्रं विश्वरूपं अब्रवीत् अवदत्। ब्रूञ् व्यक्तायां वाचि कर्तरि लङ्. परस्मैपदं। हे विश्वरूप आवामिति शेषः। जल्पावः जल्पाख्यवादः कुर्वः जल्पशब्दे कर्तरि लट् परस्मैपदं। उत्तमपुरुषद्विवचनं। तव दयितादसौभार्या प्राश्निकत्वे माध्यस्ते कल्प्यतां क्लृपूसामर्थ्ये कर्मणि लिङ.त्मनेमदं ॥ ६ ॥ स इति। य पुरुषःआवयोर्मध्ये इति शेषः पराभवं तिरस्कारं एष्यति

स आश्रमांतरं प्रायाद्यःपराभवमेष्यति। इत्युक्त्वा ते न सोऽजल्पत्सापतिं जितमब्रवीत् ॥ ७ ॥
ततःपर्यव्रजद्विप्रस्तया रेमे च संकरः। क्वचित्तेनासुरेशेन पर्यपश्यत्समंडनः ॥ ८ ॥

प्राप्नोति। इषुइच्छायां कर्तरि लिट् परस्मैपदं। पराभूतः पुरुषः आश्रमातरं अन्योआश्रमः आश्रमांतरभूतं तथा प्रायात् प्राप्नोतु। याप्रापणे कर्तरिलिङ्.परस्मैपदं। अयं भावः त्वं जितश्चेत् संन्यासी च भव अहं जि-

तश्चेत् जातिभ्रष्टो भवामीति स संकरः इत्युक्त्वा तेन विश्वरूपेण अजल्पत् । जल्पशब्दे कर्तरि लङ्. परसामाध्यस्तेस्थिता विश्वरूपभार्या पतिं स्वभर्तारं जितं अब्रवीत् अवदत् । अनादरः परिभाव परीभवःस्तिरस्क्रियेत्यमरः ।। ७ ।। तत इति ; ततः वादपरिसमाप्त्यनंतरं विप्रः विश्वरूपःपर्यव्रजत् संन्यासी अभूत् । व्रजगतौ कर्तरि लिङ्. परस्मैपदं । संकरःतया विश्वरूपभार्यया रेमे क्रीडामकरोत् । रमुक्रीडायां कर्तरि लिडात्मनेपदं । असुरेशेन असुरश्रेष्ठेन तेन संकरेण क्वचित् कस्मिंश्चित्काले मंडनःमंडनमिश्रः पर्यपश्यत् अपश्यत् । दृशिर प्रेक्षणे कर्मणि लिङात्मनेपदं ।।८।। स कीदृश इत्यत आह य इति । यःमंडनमिश्रःभट्टेन

योभट्टेन पराभूतो बहुशास्त्राणि शुश्रुवान् । निर्ययौ वारणारूढःसंतं संकरमब्रवीत् ॥ ९ ॥
कुतो मुंड इति प्राह आगलान्मुंड इत्यमुं । मंडनस्त्वाह पंथानं पृच्छामीत्यथ सोऽब्रवीत् ॥ १० ॥

भट्टकुमारेण पराभूतः सन् तिरस्कृतःसन् बहुशास्त्राणि अनेकशास्त्राणि शब्दशास्त्राणीति क्वचित्पाठः अधीतवान् कारकक्रियापदं । समंडनःवारणारूढः । कुंजरोवारणःकरीत्यमरः । आरूढःसन्निर्ययौ । आपणवीथ्यां निर्गत इत्यर्थः । याप्रपणे विश्वरूपभार्यासहित संकरं प्रति मंडनमिश्रःकस्माद्देशान्मर्गादाग च्छसीत्यभिप्रायेण सामान्यशब्देन संकरं प्रत्याह ।।९।। कुत इति । हे संकर त्वं कुतः कस्मान्मुंडः संन्यासीति मंडनःसंकर प्रत्याह । हे मंडनमिश्र अहं आगलात् आंङ् मर्यादायां कंठपर्यंतं मुंड इति संकर अमुं मंडनं आह । हे संकर अहं त्वां पंथानं मार्गं पृच्छामिशृणोमि । पृच्छज्ञीप्सायांकर्तरि लिट् परस्मैपदं ।। उत्तमपुरुषैकवचनं । इति

किमाह पंथा इति ते माता रंडेति मंडनः। स्माह तं भिक्षुकःसत्यमाह पंथा इति च्छलं ॥११॥
निगृहीतेऽप्रतिभया भैरव्या कुक्कुटेन च। क्षोभितो ब्राह्मणःशीघ्रमन्ववर्तत भिक्षुकं ॥१२॥

मंडनमिश्रः आह उवाच । वचपरिभाषणे । अथ अनंतरं स संकरःअब्रवीत् ।१०। तदेव दर्शयति किमिति । हे मंडन पंथा मार्गःनकारांतः किं किमुत्तरमाह अब्रवीत् । इत्येवं प्रकारेण सोऽब्रवीदिति पूर्वेणान्वयः । हे सकर ते तव माता रंडा विधवेति मंडन आह । मार्गेण तव माता रंडेत्युत्तरमदादित्यर्थः । हे मंडन पंथा मार्गः सत्यं यथार्थवचनं त्वां प्रत्याह । अब्रवीदिति भिक्षुकःसंकरः तं मंडनं प्रति छलोत्तरं आह । त्वया सम्यक् पृष्टे मार्गेऽपि सम्यगुत्तरं दत्तमिति अपहासपूर्वकं दत्तवानित्यर्थः ।।११।। निगृहीत इति । ब्राह्मणः मंडनमिश्रः अप्रतिभया अपरस्फूर्त्या भैरव्याख्यशक्त्या कुक्कुटेन मंत्रेण निगृहीतः निराकृतः सन् क्षोभितः व्याकुलितः शीघ्रं भिक्षुकं संकरं अन्ववर्तत शिष्योऽभूत् । वृतुवर्तने कर्तरि लङात्मनेपदं प्रथमपुरुषैकवचनं ।।१२।। तोटकः इति । तोटकःपद्मपादःज्ञानोत्तमःतथा बीजभुक् जकारांतः एवं प्रकारेण एते पूर्वोक्तविशिष्टाः

तोटकःपद्मपादश्च ज्ञानोच्चो बीजभुक् तथा । इत्येते मायिनःशिष्या आसंश्चत्वार उल्बणाः ॥१३॥
सिद्धत्रयमकार्षुस्ते शिष्या ज्ञानोत्तमादयः। तोटकादीनि चत्वारि तामसाख्यनिरर्गलं ॥१४॥

उल्बणाःक्रूराःचत्वारःचतुःसंख्याकाःमायिनःसंकरस्य शिष्याःआसन् अभवन् । अस भुवि कर्तरिलङ् ।।१३।। सिद्धत्रयमिति । ज्ञानोत्तम एव आदिर्येषां ते तथा ते शिष्याःसिद्धत्रयं दत्तभैरवीकुक्कुटाख्यद्वयं वृध्रिस्वसा-

धिते कृपणाख्येकमिति मंत्राणां त्रयं तोटकादीनि। तोटकादीनां संबंधीनि चत्वारि शास्त्राणीत्यध्याहार: तामसस्य तमोगुणप्रचुरं तमआख्यनित्यनरकस्य निरर्गलं वा। न विद्यते अर्गल:प्रतिबंधकं यथा भवति तथा। अथवा सिद्धत्रयविशेषणं वाऽकार्षुः। डुकृञ्‌ करणे लङ्‌ परस्मैपदं प्रथमपुरुषबहुवचनं ॥१४॥ तेषां ज्ञानो-

**तेषां शिष्यप्रशिष्याद्या यत्याभासाश्चतुर्विधाः। अबृंहयत वंशान्स्वान् न्यसयंतः पृथग्जनान् ॥ १५ ॥**
**दक्षिणाशां ततो गत्वा दग्ध्वा मातुःकलेवरं। आगत्य स्वमठं प्राप्य संकरो रोगपीडितः ॥१६॥**





तमादीनां शिष्याद्याश्चतुर्विधा:। हंसपरमहंसकुटीचकबहूदकभेदेन चतु:प्रकारोपेता:। यत्याभासा यतय इव प्रतीयमाना:। पृथक्‌जनान् नीचान् न्यसयंत:संन्यासिन: कारयन्त: सत:स्वान् स्वकीयान् वंशान् अबृंहयत अभि वृद्धिचक्रुः बृहिवृद्धौलङात्मनेपदं प्रथमपुरुषबहुवचनं। विवर्ण:पामरो नीच: प्राकृतश्च पृथग्जन इत्यमर: ॥१५। दक्षिणेति। संकर:तत:स्वमठात् दक्षिणदिशं गत्वा प्राप्य स्वस्यागमनपर्यंतं प्राणान् धृत्वा स्वदर्शना न्मृताया: मातुर्जनन्या:कलेवरं देहं दग्ध्वा भस्मीकृत्वा उत्तरदिशमितिशेष:। आगत्य प्राप्य स्वमठं प्राप्य रोग पीडित: सन् बाधित:आसीदिति शेष: ॥१६॥ तत इति। ततोऽनंतरं काले मृतिकाले समायाते आगते सति

**ततःकाले समायाते श्वासज्वरभगन्दरैः। दुःखाद्यैःपीडितस्यास्य वाणी किंचिदलीयत ॥ ॥**
**मुमूर्षुं स्वगुरुं दृष्टवा मायिनो वेदविद्विषः। भगवान्नःपरंकृत्यं किमपृच्छन्ससंभ्रमाः ॥१८॥**

दु:खाद्यैर्दु:खमेव आद्यं येषां ते तथा तै: श्वासज्वरभगंदरै:पीडितस्यअस्य संकरस्य वाणी गी: किंचिदल्पं

अलीयत नष्टाऽभवत् । लीङ्.श्लेषणे लङ.ात्मनेपदं प्रथमपुरुषैकवचनं ।१७। मुमूर्षुमिति । वेदविद्विष:विशेषेण द्वेषवंत: मायिन:संकरस्य शिष्या: मुमूर्षु मर्तुमिच्छु:मुमूर्षु: तं स्वगुरं दृष्टवा अवलोक्य ससंभ्रमा:सवेगा:संत: कातरा इत्यर्थ: । संभ्रमो वेगहर्षयोरित्यमर: । हे भगवन् हे संकर न:अस्माकं परं मुख्यं कृत्यं प्रयोजनं किमिति अपृच्छन् अब्रुवन् । पृच्छ ज्ञीप्सायां कर्तरि लङ्. परस्मैदं ॥ १८ ॥ स इति । स महासुर:

स स्माह तान् कृतप्रायं सत्यं कृत्यं महासुरः ।उत्सायतामथ क्षिप्रं परतीर्थार्यशिष्यकाः ॥१९॥
परतीर्थःप्रकृत्यैव शापानुग्रहशक्तिमान् । तीव्रतर्कैस्तपोभिश्च प्रवया अत्यजत्तनुं ॥ २० ॥

संकर: तान् शिष्यान् प्रत्याह स्म । कृत्यं कार्यजातं प्रायश:कृतं सत्यं यथार्थं अथ अथापि भवद्भिरिति शेष:। क्षिप्रं शीघ्रं परतीर्थार्यशिष्यका: परतीर्थयते: शिष्यका उत्साद्यतां निष्कास्यतां । षद्लृविशरणगत्यसादनेषु कर्मणि लोडात्मनेपदं । प्रथमपुरुषैकवचनं ॥१९॥ परतीर्थ इति । तीव्रतर्कै:तीक्ष्णतर्कै:तपोभिश्च कृच्छ्रचांद्रायणादितपोभिश्च । प्रवया:सकारांत: श्रेष्टो वृद्धश्च प्रकृत्यैव स्वभावेनैव शापानुग्रहशक्तिमान् शापश्च अनुग्रहश्च तयोः शक्ति: सामर्थ्यमस्यास्तीति तथा । परस्य तत्वस्य तीर्थमाश्रय इति यावत् तनुं शरीरं अत्यजत् । तत्याज । त्यज वयोहानौ कर्तरि लङ्. परस्मैपदं प्रथमपुरुषैकवचनं ॥२०॥ सत्यप्रज्ञइति । इह

सत्यप्रज्ञो दुराधर्षःशक्तोऽपीह हरिद्विषां । ऋषिभ्यो हिमवत्पृष्ठे श्रुतीर्व्याख्यात्यगोचरः ॥२१॥
तच्छिष्यो निपुणःशांतो वेदवेदांतकोविदः । श्रुतीर्व्याख्यातिशिष्येभ्यः पंचषेभ्यस्तपोमयः ॥२२॥

अस्मिन् लोके हरिद्विषां दैत्यानां शक्तोपि शिक्षितुं समर्थोपि दुराधर्षःधर्तुमशक्यःसत्यप्रज्ञः सत्याःयथार्थाः प्रज्ञाबुद्धिर्यस्य स तथा । हिमवत्पृष्टे हिमान्यस्मिन् संतीति हिमवान् तस्य हिमवतः पर्वतस्य पृष्ठभागे अगोचरः मनुष्यदृष्टयविषयःसन् ऋषिभ्यःश्रुतीर्वेदान् व्याख्याति व्याख्यानं करोति । ख्याप्रकथने लट् परस्मैपदं । श्रुतिःस्त्री वेद आम्नाय इत्यमरः ॥२१॥ तच्छिष्य इति । निपुणःकुशलः शांतःइंद्रियनिग्रह संपन्नः वेदवेदांतकोविदःवेदेषुवेदांतेषु उपनिषत्सु कोविदःकुशलः तपोमय बहुतपस्वी प्राचुर्यार्थेमयट् । तच्छिष्यः तस्य परतीर्थस्य शिष्यः प्राज्ञतीर्थः पंचषेभ्यःपंचषड्वा पंचषट् तेभ्यः शिष्येभ्यः श्रुतीर्वेदान्व्याख्याति नंदिग्राममठे व्याख्यानं करोति ॥२२॥ नान्य इति । दैतेयपुंगवाःदैतेयानां दैत्यानां पुंगवाःश्रेष्टाः । श्रुतेर्वेदस्य संप्रदायं

नान्योऽस्ति संप्रदायज्ञःश्रुतेर्दैतेयपुंगवाः । एत्य हंसानिमान् क्षिप्रमुत्सादयत निर्भयाः ॥२३॥
आदिश्येत्थं बलवतःशिष्यानन्यान्महासुरान् । आहूय चतुरो दैत्यानाहांतेवासिनोऽसुरः ॥२४॥

जानातीति संप्रदायज्ञः । अन्यः अस्मादपरःनास्ति । असभुवि कर्तरि लट् परस्मैपदं । प्रथमपुरुषैकवचनांतः । यूयमिति शेषः । इमान् प्राज्ञतीर्थादीन् हंसान् संन्यासिनः क्षिप्रं शीघ्रं एत्य प्राप्य निर्भयाः संतः उत्सादयत । षदलृविशरणगत्यवसादनेषु कर्तरि लोट् । मध्यमपुरुषबहुवचनं ॥ २३ ॥ आदिश्येति असुरःसंकरः बलवतः तकारांतः बलमेषामस्तीति बलवतः तान् तथा महासुरान् चतुरःचतुःसंख्यान् शिष्यान् इत्थं उक्तप्रकारेण आदिश्य आज्ञाप्य अन्यान् परान् दैत्यान् अंतेवासिनःशिष्यान् । छात्रांतेवासिनौ शिष्य इत्यमरः । आहूय

बीजादं शृणुतास्माकमैष्यंतं भवसंकटं। इत्युक्तास्ते दशदिशःपरिभ्रम्य समागताः ॥२५॥
किमपश्यत बीजादः किमवोचत्स मे गतिं। इत्युक्तास्ते स्वगुरुणा रहस्तं प्रत्यचक्षत ॥२६॥

का गतिः उवाच । ब्रूञ् व्यक्तायां वाचि कर्तरि लिट् परस्मैपदं । प्रथमपुरुषैकवचनं ॥२४॥ किमित्यत बी आह । जादमिति । हे शिष्य इति शेषः । अस्माकं एष्यंतं इतःपरमागतसंकटं जन्मसंकटं बीजादं शृणुत पृच्छत । श्रुश्रवणे लोट् परस्मैपदं मध्यमपुरुषबहुवचनं । इति उक्त्वा ते शिष्याः दश दिक्षु परिभ्रम्य संचारं कृत्वा समागताः कारकक्रियापदं ॥ २५ ॥ किमिति हे शिष्या इत्यध्याहारः बीजादं अपश्यत । किं दृष्टाः किं दृशिर प्रेक्षणे लडात्नेपदमध्यमपुरुषबहुवचनं । सःबीजादःमे मम किं गतिं कां वा गतिं अवोचत उक्तवान् वचपरिभाषणे लङ्.परस्मैपदं प्रथमपुरुषैकवचनं । इत्येवं प्रकारेण स्वगुरुणा संकट उक्तः ते शिष्या रहः एकांते तं प्रति संकरं प्रति प्रत्यचक्षत प्रत्युत्तरं ददुः । चक्षिङ्.व्यक्तायां वाचि लङ.त्मनेपदं प्रथमपुरुषैकवचनं ॥२६॥ गुरोरिति । अस्माभिरिति शेषः । नरं प्रति प्रतिपुरुषमित्यर्थः । दृष्टं दृष्ट न अस्माकं

गुरोःका नो गतिरिति दृष्टं दृष्टं नरं प्रति। विचार्याप्युत्तरं नाप्तमित्येकः पुनरब्रवीत् ॥२७॥
द्वयं संकरस्यास्ति पद्मस्य चैकं ममैकं च नैकं नैकं च नास्ति। गिरेत्येतया कंदुकक्रीडमेकमवेक्ष्येत्यज पक्कणांते क्वचेति ॥२८॥ हा हा बीजादैष गूढो मदीयो भूयस्तात व्यापृतोऽहं गुणेषु।
किं वास्माकं भावि का वा गतिःस्यादित्थं जल्पन्नाप दीर्घां सनिद्रां ॥२९॥

इति मणिमञ्जर्यां सप्तमःसर्गःसमाप्तः ॥७॥

 

ईति विचार्य का गति रिति विचारे कृतेसति उत्तरं प्रत्युत्तरं केंभ्यःनाप्तं न लब्धं इति प्रत्याचक्षत इत्यन्वयः। पुनरेकः अन्यः शिष्योऽब्रवीदुवाच ॥ २७ ॥ किमाहेत्यत आह द्वयमिति । संकरस्य द्वयं जन्मद्वयं पद्मपादस्य च एकं जन्मास्ति । मम एकं च न एकं जन्म नास्ति । इत्येतया एवंरूपया गिरा वाचा कंदुकक्रीडं कंदुकेन क्रीडमानं एकं अंत्यजं चंडालं पक्कणांते शबरालयसमीपे क्वचक्कचित्स्थले अहं तु अहमेव अवेक्षे दृष्टवानस्मि । ईक्षदर्शनांकनयोर्लड.त्मनेपदं उत्तमपुरुषैकवचनं । इत्यब्रवीदिति पूर्वेण संबंधः ।२८। हाहेति एषःगूढो गोप्यः बीजाद मदीयःमम संबंधी सखा च हा कष्टं कष्टं तात हे बीजाद अहं गुणेषु भूयः पुनःव्यापृतः पतितःकारकक्रियापदं । अस्माकं भावि भविष्यती गतिः किं वा का वा स्यात् भवेत् । असभुवि लङ् परस्मैपदं प्रथमपुरुषैकवचनं । एवंप्रकारेण जल्पन् शब्दं कुर्वन्सन् सःसंकरःदीर्घनिद्रां मृतिलक्षणनिद्रां आप अगमत् । याप्रापणे लिट् परस्मैपदं प्रथमपुरुषैकवचनं ।।२९। इतिश्रीमत्क. मणिमञ्जरीटीकायां सप्तमःसर्गः समाप्तः ।।७।। श्रीकृष्णार्पणमस्तु ।।



मायाविना समादिष्टा मूर्खाःपत्तलजन्मना। नंदिग्रामं समासाद्य हंसानामदहन्मठं ॥ १ ॥
निजघ्नुर्गोव्रजं ग्रामे भैरव्या बालकानपि। विप्रानज्वरयन् दैत्या अबला उदसादयन् ॥ २॥

मायाविनेति । मायाविना मिथ्याज्ञानिना पत्तलजेन्मना कालडीग्रामजन संकरेण समादिष्टाः आज्ञप्ताः मूर्खाःज्ञानोत्तमादयःनंदिग्रामं समासाद्य प्राप्य हंसानां प्राज्ञतीर्थसहितसंन्यासिनां मठं अदहन् । दहनमकुर्वन् दहभस्मीकरणे लङ्. परस्मैपदं प्रथमपुरुषबहुवचनं ।।१।। निजघ्नुरिति । दैत्याःसंकरशिष्याःभैरव्या भैरव्या–ख्याशक्त्या ग्रामे नंदिग्रामे गोव्रजं गवां व्रजं समूहं बालकानपि निजघ्नुः । हनहिंसागत्योःकर्तरि लिट् परस्मैपदं ।। प्रथमपुरुषबहुवचनं । विप्रान् प्राज्ञतीर्थशिष्यान् ब्राह्मणान् अज्वरयन् ज्वरपीडितान् चक्रुः । ज्वरसंतापे कर्तरि लङ् प्रथमपुरुषबहुवचनं। अबलाःविप्रपत्नीःद्वितीयाबहुवचनं । उदसादयन् अहिंसन् हनहिं-

प्राज्ञतीर्थःस शिष्योऽसौ छिन्नदंडकमंडलुः । उद्दिश्य प्रस्थितःप्रातःसत्क्षेत्रं पौरुषोत्तमं ॥ ३ ॥
मायिनस्ताननुद्रुत्य हंसाग्र्यान विजने स्थले। अभिहत्य निपात्योचुः संप्राप्तप्राणसंकटान् ॥ ४ ॥

सागत्योर्लङ्. ।। २ ।। प्राज्ञतीर्थ इति । सशिष्यःशिष्यैःसहितः असौ प्राज्ञतीर्थः प्रज्ञा ज्ञानमेषामस्तीति प्राज्ञाः तेषां ज्ञानिनां तीर्थं आश्रय इति यावत् । छिन्नदंडकमंडलुः सन् छिन्नौ छेदितौ दण्डमण्डकलू यस्य स तथा । पौरुषोत्तमं पुरुषोत्तमसंबंधि सत्क्षेत्रंसत् समीचीनं क्षेत्रं जगन्नाथक्षेत्रमुद्दिश्य उद्देशं कृत्वा प्रातःकाले प्रस्थितः गतः कारकक्रियापदं । योनौ जलावतारे च मंत्राद्यष्टादशस्वपि । पुण्यक्षेत्रे तथापात्रे तीर्थस्यदर्शनेषु च ।।३।। मायिन इति । मायिनो ज्ञानोत्तमादयः हंसाग्र्यान् संन्यासिश्रेष्ठान् प्राज्ञतीर्थादिकान् अनुद्रुत्य विजने विगताःजनाः यस्मात्तत्तथा तस्मिन् स्थले अभिहत्य निपात्य । संप्राप्तप्राणसंकटा येषां ते तथा तान् ऊचुः । वचपरिभाषणे ।। ४ ।। अस्मानिति । ते प्राज्ञतीर्थादयः मूर्खैर्मायिभिः हे प्राज्ञतीर्थादयः यूयं अस्मान् आह

अस्माननुव्रजध्वं वा म्रियध्वं वा विचिंत्यतां। इत्युक्ता मायिभिर्मूर्खैरन्वयामेति तेऽब्रुवन् ॥ ५ ॥
अथ ज्ञानोत्तमस्तेभ्यो दत्वा दंडादिकं खलः। व्यत्यस्य लांछनं चोपदिदेशाकूतमासुरं ॥ ६ ॥

अनुव्रजध्वं वा म्रियध्वं वा भवद्भिर्विचिंत्यतां इत्युक्ताःसंतःहे मायिनःयुष्मान् अन्वयामेति दैत्यान् अब्रुवन् । व्रजगतौ लट् परस्मैपदं । मध्यमपुरुषबहुवचनं । मृङ् प्राणत्यागे मध्यमपुरुषबहुवचनं । इण्गतौ लिट् परस्मैपदं । उत्तमपुरुषबहुवचनं ॥५॥ अथेति । अथ खलः ज्ञानोत्तमास्तेभ्यः प्राज्ञतीर्थादिभ्यः दंडकमंडलुशाठ्यादिसर्वलांछनं वैष्णवचिन्हं व्यत्यस्य निरस्यासुरं असुरसंबंधि आकूतं निष्टां उपदिदेश उपदेशं चकार। दिश-अतिसर्जने लिट् ॥६॥ तेभ्य इति । निपुणाःकुशलाःपरमहंसाः ते प्राज्ञतीर्थादयः गूढचेतसः गूढचित्ताःसंतः

तेभ्यस्ते निपुणा हंसाः परमा गूढचेतसः। श्रुत्वा शारीरकं भाष्यं व्याचख्युस्तर्ककर्कशाः ॥ ७ ॥
मायिनो वंचयित्वैवं संतोषविवशाशयान्। आनंदबालमठगान् न्यवसन् सह ते अमी ॥८॥
विश्वस्य प्राज्ञतीर्थार्यमैकात्म्योपारित निष्ठितं। मायावादरतं दृष्ट्वा मायिनो जहृषुर्मुदा ॥ ९ ॥

तेभ्यःज्ञानोत्तमादिभ्यः शारीरकं भाष्यं श्रुत्वा तर्ककर्कशाःसंतः व्याचख्युःव्याख्यानं चक्रुः। ख्याप्रकथने । ततः शरीरकं श्रुत्वा निराचक्रे । महाप्रभुरिति वचनात् ॥ ७ ॥ मायिन इति । अमी सत्यप्रज्ञादयः संतोषविवशाशयन् संतोषेण विवशःपरवशः आशयोऽभिप्रायो येषां ते तांस्तथा । आनंदबालमठगान् । एवं वंचयित्वा तैर्ज्ञानोत्तमादिभिः सह न्यवसन् वसनिवासे । कदाचिज्जातु सार्धं तु साकं सत्रा समं सहेत्यमरः ॥८॥

विश्वस्येति । मायिनो ज्ञानोत्तमादय: प्राज्ञतीर्थं ऐकात्म्योपास्तौ संजाता निष्टा यस्य स: तं तथेति शेष: । विश्वस्य विश्वासं कृत्वा मायावादरतं दृष्वा मुहु:बहुश:जहृषु:हर्षहर्षणे लिट् ।। ९।। तमिति । अथ मायिनो

तं सशिष्यं सदाचारमवलोक्याथ मायिनः। पानभोगाबलाकांक्षा विहाय प्रययुः शनैः ॥ १० ॥
अयं हि प्राज्ञतीर्थार्यःसदाचारातिकर्कशः। गुरूनस्मान्दुराचारन् गर्हयेदिति भीरवः ॥११॥

ज्ञानोत्तमादय: स्वशिष्यं प्राज्ञतीर्थं सदाचारं सत् आचार:यस्य स तथा । तं अवलोक्य पानभोगाबलाकांक्षा: संत:पानानि च भोगाश्च अबला:स्त्रियश्च तासु आकांक्षा येषां ते तथा । तं प्राज्ञतीर्थं विहाय शनै:ययु: । ईच्छाकांक्षास्पृहेहातृड्वांछालिप्सामनोरथ इत्यमर: ।१०। कस्मात्कारणात्तद्विहायगता इत्यस्याभिप्रायमाह हि यस्मात्कारणादयं प्राज्ञतीर्थार्य: सदाचारातिकर्कश: दुष्टाचारान् गुरून् अस्मान् गर्हये दिति कारणात् । भीरव:भीता:संत:गर्हनिदायां लिट् । हिर्हेतावत्रधारण इत्यमर: ।।११।। प्राज्ञतीर्थ इति । तदा मायिनां

प्राज्ञतीर्थस्तदाशिष्यान् हंसानाहूय संमतान् । रहस्याहमहानेष हरिणानुग्रहःकृतः ॥१२॥
बर्बरामायिनःसर्वे ययुर्विश्वस्य नःसुखं । पारयित्वा चतुर्मासव्रतं यामो वयं त्विति ॥१३॥

गामनानंतरं प्राज्ञतीर्थ:समतान् अनुकूलान् हंसान् संन्यासिन:शिष्यान् रहसि एकांते आहूय हरिणा श्रीविष्णुना महानेष: अनुग्रह:कृत:कारकपदं इत्याह ।।१२।। पुन:किमित्याह बर्बरा इति । वर्बरामायिनो मूर्खा:

ज्ञानोत्तमादयः अस्मान् विश्वस्य सुखंययुः । लिट् । चातुर्मास्यव्रतं चत्वारो मासास्तेषां व्रतं चातुर्मास्यव्रतं । तत्तथा पारयित्वा यामः । याप्रापणेलट् ।। १३ ।। गत्वेति । वयं गंगां भागीरथीं गत्वा ततःभागीरथ्यां

गत्वा गंगां ततःस्नात्वा मुक्त्वाहो मायिसंभवं। मायिव्यजेन यास्यामो नंदिग्रामं शनैः शनैः ॥१४॥
इत्युक्त्वा प्राज्ञतीर्थार्यश्चातुर्मास्यादनंतरं। गत्वा सशिष्यो गंगायां स्नात्वा यादुत्तरां दिशं ॥१५॥

पारयित्वा मायिसंभवं मायिभ्यःसंभवो जन्म यस्य स तथा अंहःमुक्त्वा । मायिव्याजेन मायिन इति व्याजेन शनैःशनैः नंदिग्रामं यास्यामः । याप्रापणेलट् । कलुषंवृजिनैनोघमंहोदुरितदुष्कृतमित्यमरः । सार्वविभक्तिकस्तसिः ।।१४।। इतीति । हे प्राज्ञतीर्थार्यः श्रेष्ठ इत्युक्त्वा चातुर्मास्यव्रतानंतरं सशिष्यःसन् गत्वा गंगायां स्नात्वा उत्तरां दिशं आयात् । याप्रापणे ।।१५।। नंदिग्राममिति । आर्यःप्राज्ञतीर्थार्यः नंदिग्रामं समासाद्य

नंदिग्रामं समासाद्य हरिं संस्मार्य सज्जनान् । निरोगानकरोदार्यो रहो नाथमसेवयत् ॥१६॥
प्राज्ञतीर्थश्च तच्छिष्या भक्त्या संभाजिता जनैः। बदर्यां मुनयःस्नात्वा तीर्थे तीव्रं तपोऽचरन् ॥१७॥

सज्जनान् मायिज्वरपीडितान् हरिं संस्मार्य स्वयं स्मृत्वा स्मारयित्वा । निरोगान् निर्गतो रोगो येभ्यस्ते तथा तान् अकरोत् । रहःनाथं श्रीनारायणं असेवयत् । कृञ् करणे सेवायां लङ् । रुक्स्त्रीरूजाचोपतापरोगव्याधिगदामयाःइत्यमरः ।।१६।। प्राज्ञतीर्थ इति । प्राज्ञतीर्थस्यशिष्यःनंदिग्रामनिवासिभिः भक्त्या स्नेहेन सभाजिताःसंतःबदर्यां तीर्थे स्नात्वा । मुनयो मौनिनःसंतःतीव्रं तपःअचरन् । चरगतिभक्षणयोः । तपस्वी

नारायण नमस्तुभ्यं नमो वस्तात्विकाः सुराः । हा हा नःसुगतिं देहि गुरो नाथेति चक्रशुः ॥१८॥
तेषामाविरभूत्सत्यप्रज्ञःसाकं महर्षिभिः । तस्मै हंसा द्रुतं नेमुःसर्वे ते दैत्यपीडिताः ॥१९॥

तापसः पारिकांक्षी वाचंयमो मुनिरित्यमरः ॥१७॥ नारायणेति । प्राज्ञतीर्थार्यः नारायण तुभ्यंनमः नमो वस्तात्विकाःसुराः युष्माकं नमः । गुरो हे सत्यप्रज्ञ नाथ हे श्रीनारायण नोऽस्माकं सुगतिं देहि । हाहा इति चुक्रुशुः । क्रुशआक्रोशने लिट् परस्मैपदं । हाविषादाशुगीतिषु । अहहेत्यद्भुतेखेदेहिर्हेतावधारण इत्यमरः ।१८। तेषामिति । महर्षिभिःसाकं सत्यप्राज्ञतीर्थःगुरुःतेषां प्राज्ञतीर्थादीनां आविरभूत् । प्रकटीबभूव । दैत्यपीडिताः संन्यासिनःतस्मै सत्यप्रज्ञाय द्रुतं नेमुः । णमुप्रह्वत्वेशब्दे भावे लिट् ।१९। क्रदंत इति । महातपाःक्रदंतः

क्रदंतः पतितान् भूमाववुवाच स महत्तपाः । आज्ञायोत्थापयामास जनांस्तेषां महद्भयं ॥२०॥
उपविश्यासने तस्मिन्नुपवेश्य च तान् मुनीन् । उवाचाहं भयं वेद्मि भवतां तपसाखिलं ॥२१॥

क्रोशंत भूमौ पतितान् आज्ञयोत्थापयामास । तेषां महद्भयं जनान् उवाच लिट् । भीतिर्भीःसाध्वसं भयमित्यमरः ॥२०॥ उपविश्येति । सत्यप्रज्ञःतस्मिन् आसने उपविश्य मुनीन् मननशीलान् उपवेश्य अहं तपसाखिलं भवतां युष्माकं भयं वेद्मीत्युवाच ॥२१॥ अयमिति । वत्साः हे कुमाराः साक्षात्प्रत्यक्षतःकलेःकालः

अयं कालःकलेःसाक्षात् तेन चोपद्रुता जनाः । वत्सा विमुञ्चतात्युग्रं तत्वविप्लवसंकटं ॥२२॥

तवामी प्राज्ञतीतीर्थांतेवासिनः पौरुषोत्तमे । क्षेत्रे यांतु परां सिद्धिमुपास्य पुरुषोत्तमं ॥२३॥
शिष्येष्वेकःश्रुतीनां ते संप्रदायाभिगुप्तये । चरतांमायिभिःसार्धं तेषां छंदानुवर्तनैः ॥२४॥

तेन कलिकालेन जनाः सज्जनाः उपद्रुताःपीडिताः अत्युग्रसत्यतत्वविप्लवसंकटं तत्वशास्त्रनाशकष्टं विमुंचत । मुच्लृमोक्षण इति धातोर्लिङात्मनेपदं मध्यमपुरुषबहुवचनं । साक्षात्प्रत्यक्षतुल्ययोः ॥२२॥ तवेति । हे प्राज्ञतीर्थ अमी तवांतेवासिनः शिष्याः पौरुषोत्तमक्षेत्रे मायिनिर्मितकृष्णकलेवरविद्यमानक्षेत्रे जगन्नाथ इति यावत् । पुरुषोत्तमं नारायणं उपास्य परामुत्तमां मोक्षमिति यावत् । यांप्रापणेधातोर्लिट् प्रथमपुरुष– बहुवचनं ॥ २३ ॥ शिष्येष्विति । हे प्राज्ञतीर्थ तव शिष्येषु मध्ये एकःश्रुतीनां वेदानां संप्रदायाभिगुप्तये संप्रदायस्य रक्षार्थं तेषा । लोडात्मनेपदं । अभिप्रायवशौछंदावित्यमरः ॥२४॥ समिति । हे प्राज्ञतीर्थ स

संन्यासयेत्सनिपुणमेकं वंशधरं द्विजं। सोप्यन्यमन्यंसोपीति वंशो न स्यादखंडितः ॥२५॥
नारायणःपरःस्वामी सत्यज्ञानादिसद्गुणः । तस्य दासोस्म्यहं सत्यमित्युपासा प्रवर्ततां ॥२६॥

मायिभिःसह वर्तमानः निपुणं कुशलं वंशधरं वंशं धरतीति वंशधरःतं तथा । एकं द्विजं संन्यासयत् एवं प्रकारेणनोऽस्माकं वंशः अखंडः खंडो व्यवधानो न भवेदिति यावत् । असभुवि लिट् । प्रवीणेनिपुणाभिज्ञ- विज्ञनिष्णातशिक्षिताः। वैज्ञानिकःकृतमुखःकृतीकुशल इत्यपीत्यमरः । चान्वाचये समाहारेतरेतरसमुच्चये । गर्हःसमुच्चये प्रश्नशंकासंभावनास्वपीत्यमरः ॥२५॥ नारायण इति । हे प्राज्ञतीर्थ पारंपर्येण वंशधरैः परः

स्वामी ईश्वरः सत्यज्ञानानि सद्गुणां सत्यं च ज्ञानंच सत्यज्ञाने त एव आदी येषां ते ज्ञानादयः ते सद्गुणा यस्मिन् स तथा । सत्यं ज्ञानमनंतं ब्रह्मेतिश्रुत्यर्थःसूचितो भवति । नारायणः अहं तस्य नारायणस्य दासःभृत्यः सत्यं यथार्थः एवंप्रकारेण उपासना प्रवर्तता । वृतुवर्तने । अयं स्वामी ईश्वरःपतिरीशिता । अधिभूर्नायको नेता प्रभुः परिवृढोऽधिप इत्यमरः ।२६। मायिन इति । हे प्राज्ञतीर्थ युष्मदादिभिः मायिनां लांछनं चिन्हं गोपी-

मायिनां लांछनं धार्यं कार्यं तन्नमनादिकं । स्मृत्वा हरिं तदंतस्थं मायावादश्च पठ्यतां ॥२७॥
महासुरमये लोके नैवाविष्कर्तुमर्हसि । भैरव्या वा कृपाण्या वा मायिनो घ्नंति वैदिकान् ॥२८॥

चंदनादिधार्यं तदंतस्थं तेषां मायिनामंतस्थं हरिं विष्णुं स्मृत्वा तन्नमनादिकं मायावादिनां नमनादिकं सेवा-कर्म कार्यं । मायावादमिथ्याभूतशास्त्रं पठ्यतां । पठपाठे कर्मणि लिट् ।२७। महासुरेति । हे प्राज्ञतीर्थ लोके भुवने महासुरमये सति । महतामसुराणां मयः प्राचुर्यःयस्मिन् स तथा । आविष्कर्तुं वेदोक्तं मतं प्रकटीकर्तुं नार्हसि । कुतःमायिनो मिथ्यावादिनः भैरव्या कृपाणाख्यशक्त्या वा वैदिकान् वेदोक्तकर्माणि वेदाश्च येषां संति ते वैदिकाः तान् तथा इतरस्त्वर्थे णित् घ्नंति भविष्यत्समीपे लिट् । हनहिंसागत्यार्लिट् । त्रिष्वथो जटती लोको विष्टपं भुवनं जगत् ।।२८।। सार्धश्लोकेनैकान्वयः । तेभ्य इति । हे प्राज्ञतीर्थ मायिभ्यः

तेभ्यो गोपायतात्मानं संप्रदायं न मुंचत। इत्युक्त्वा सत्यसंवित्तं त्याज्यं दंडपटादिकं ॥२९॥
मायिदत्तं पुनस्तेभ्यो दंडाद्यं पूर्ववद्ददौ । ताननुज्ञाप्य सत्यात्मा पूर्ववत्स तिरोदधे ॥३०॥

यूयं आत्मानं देहं गोपायत रक्षत । संप्रदायपरंपरोपदेशं न मुंचत । भवद्भिर्मायिदत्तं ज्ञानोत्तमादिभिर्दत्तं दंडादिकं त्याज्यमिति सत्यं संवित् सत्यप्रज्ञः तं प्राज्ञतीर्थं उक्त्वा पुनस्तेभ्यः दंडादिकं पूर्ववद्ददौ । दादाने लिट् । गुपूरक्षणे मुच्लृमोक्षणे लोट् परस्मैपदं । मध्यमपुरुषबहुचनं ॥२९॥ तानिति । स सत्यात्मा

प्राज्ञशिष्या ययुःक्षेत्रं विरक्ताःपौरुषोत्तमं प्राज्ञो । गुरूपदिष्टेन मार्गेणोवास मायिभिः ॥३१॥
एकं वंशधरं शिष्यं कृत्वोपास्तिमशिक्षयत् । अन्यं संन्यस्य सोऽपि स्वं संप्रदायमशिक्षयत् ॥३२॥

सत्यपज्ञः तान् प्राज्ञतीर्थादीन् अनुज्ञाप्य आज्ञां दत्वा पूर्ववत्तिरोदधे । डुधाञ् धारणपोषणयोर्लिट् । तिरोंतर्धौतिर्यगित्यमरः ।३०। प्राज्ञेति । प्राज्ञशिष्याः विरक्ताःसंतःपौरुषोत्तमं क्षेत्रं ययुः । प्राज्ञःप्राज्ञतीर्थः गुरुपदिष्टमार्गेण मायिभिः सह आस । असभुवि लिट् ।।३१। एकमिति । स प्राज्ञतीर्थः वंशधरं एकं शिष्यं कृत्वा उपास्ति उपासनां अशिक्षयत् । शिक्षशिक्षायां लङ् । स्वसिद्धि जगामेति शेषः । स शिष्यः अन्यं संन्यस्य सन्यासिनं कृत्वा स्वसंप्रदायमशिक्षयत । स्वयं देवमसेवतेति शेषः ।।३२। स इति । सत्यप्रज्ञशिष्यः

सोप्यन्यमित्ययं वंशो नोदच्छिद्यत भाग्यतः। ततःकेवलवंशेऽस्मिन् मायिभिः स्वजनभ्रमात् ।
गृह्यमाणोच्युतप्रेक्षः पारिव्राज्यमुपागमत् ॥३३॥
अथासुराणां श्रुतिदूषकाणामुत्सादनायार्थयतः सुरेंद्रान् । आनंदयन् श्रीदयिताज्ञयेशः संजीवनात्मावततार भूमौ ॥३४॥
अन्यमशिक्षयदिति शेषः। इत्येवंप्रकारेण भाग्यतः पुण्यादयं वंशो नोदच्छिद्यत । तत इति। ततस्तस्मिन् केवल-

वंशे गोप्यवंशे मायिभिः मायावादिभिः स्वजनभ्रमाय, मद्वंश्य इति मिथ्याज्ञानात् अच्युतप्रेक्षः च्युतिरहितना-
रायणे प्रेक्षा चित् यस्य स तथा गृह्यमाणःसन् पारिव्राज्यं परिव्रजो भावः पारिव्राज्यं तत्तथा संन्यासमिति
यावत् । उपागमत् । दलविदारणे लड.ात्मनेपदं गम्लृगतौ । प्रेक्षोपलब्धिश्चित्संवित् इत्यमरः । भिक्षुःपरि-
व्राडित्यमरः ॥ ३३ ॥ अथेति । अथ मंगलं अच्युतप्रेक्षसंन्यासानंतरं वा । श्रुतिदूषकाणां ब्राह्मणजातिषु
जातदैत्यानां उत्सादनाय नाशनाय अर्थयतःप्रार्थनां कुर्वतःसुरेंद्रान् देवश्रेष्ठान् आनंदयन् संजीवनात्मा

स भगवानुपनीतिमितःपितुःसकलदेवसुलक्षणशिक्षणः । अधृत पारमहंस्यमथाश्रमं यतिवरात्परमच्युतचे—
तसः ॥३५॥ प्रवर्तिता या सनकादिभिः पुरा ततःपरस्तात्परतीर्थशिष्यकैः । हरेरुपास्तिं स्वगुरुप्रसादितां
मध्वाय भक्तयोपदिदेश हंसराट् ॥३६॥

सच्छास्त्राख्यसंजीवनस्वरूपईशःमुख्यप्राणः श्रीदयिताज्ञया श्रीरेव दयिता भार्या यस्य सःश्रीदयितः श्रीनारा-
यणःतस्याज्ञया भूमौ अवततार अवतारं चकार । मंगलानंतरारंभपश्नकात्स्न्र्येष्वथोअथेत्यमरः ३४ स इति ।
भगवान् षड्गुणैश्वर्यसंपन्न सः वाय्ववतारःवासुदेवाख्यबालकः पितुर्मध्यगेहाख्यात् उपनीतिमुपनयनमितः
प्राप्तःसन् सकलदेवसुलक्षणः सन् शोभनलक्षणयुक्तः सकलदेवसुशिक्षणं यस्य स तथा सकलदेवानां च शो—
भन क्षणशास्त्राणां च शिक्षणस्य वा तथा । अथ सकलसज्जनमंगलार्थं यतिवरादच्युतचेतसः अच्युतप्रेक्षात्
पारमहंस्यं परमहंससंबंधिनं परमुत्तमाश्रमं अधृत दधार । डुधाञ्धारणपोषणयोर्लंड.ात्मनेपदं ॥ ३५ ॥
प्रवर्तितेति । हंसराट् परमहंसःश्रेष्ठःअच्युतप्रेक्षःसनकादिभिःया उपासना पुरा प्रवर्तिता ततः परस्तादुप—
रिपरतीर्थशिष्यकैःप्रवर्तितेति यावत् । स्वगुरुप्रसादितां स्वगुरोः प्रसादात् अनुग्रहाज्जाता गुरुप्रसादा- दितः

तथा इतोजातेर्थेहरेःश्रीविष्णोःतामुपास्ति उपासनामवाप । मध्वाय श्रीमदानंदतीर्थाय भक्त्या प्राचीनजन्मसुस्नेहेनोपदिदेश उपदेशं चकार । दिशअतिसर्जने लिट् परस्मैपदं ॥३६॥ गुणानिति । शर्वादिसुपर्वणां

गुणाननंतानुपसंहरन् हरेरनंतरूपेषु दुरंतसंततेः । अनंतरूपो भगवाननंतधीरुपास्तशर्वादिसुपर्वणां गुरुः ॥३७॥
दस्योर्मणिमत उदितं दुर्भाष्य व्यस्य मध्वआराध्यः। वेदांतसूत्रभाष्यं सकलश्रुतितर्कबृंहितं चक्रे ॥३८॥

महादेवादिसर्वसुराणां गुरुर्भगवान् षड्गुणैश्वर्यसंपन्नः अनंतरूपःअनंतान्यपरिमितानि रूपाणि यस्य स तथा । अनंतं ध्यायतीति अनंतधीः । ध्येयचिंतायां । अथ अनंतधियः प्रज्ञायस्य स तथा । पूर्णप्रज्ञ इत्यर्थः । दुरंतसंततेःन विद्यते अंतो यस्याःसा दुरंतसंततिः सम्यग्व्याप्तिर्यस्य स तथा हरेःश्रीविष्णोः अनन्तरूपेषु अनंतान् न विद्यते अन्तो येषां ते तथा तान् गुणानुपसंहरन् उपासयन् सन् उपास्त अनंतगुणोपासनां चकार । उपेत्युपसर्गः ॥३७। दस्योरिति । शर्वेंद्रादिभिराराधयितुं योग्यः श्रीमध्वःश्रीमदानंदतीर्थः दस्योःमहाचोरात् मणिमतःसकाशादुदितं उक्तं ब्रह्मसूत्राणां दुर्भाष्यं व्यस्य निराकृत्य वेदांतसूत्रभाष्यं वेदानां अंतानि निर्णयानि च तानि सूत्राणि च तेषां ये भाष्यं तथा सकल श्रुतितर्कबृंहितं सकलश्रुतिभिःतर्कैः अनुमानैर्बृंहितं पूर्णं तत्तथा चक्रे चकार लिङात्मनेपदं ॥३८॥ ततानेति । वेदेश्वरचक्रवर्ती वेदेश्वराणां लक्ष्मीव्यतिरिक्तवेदाभिमानि–

ततान तंत्रश्रुतिगीतिकानां भाष्याणि वेदेश्वरचक्रवर्ती । पुराणरामायणभारतानां चकार तात्पर्यविनिर्णयं च ।३९।
तार्किकद्विरदपुंजभंजने मध्वकेसरिणि हंत जृंभिते । संकटेन च भयेन मायिगोमायवो दशदिशःपराद्रवन्॥४०॥

देवानां चक्रवर्तीसार्वभौमःश्रेष्ठ इत्यर्थः । श्रीमध्वतंत्राणां सिद्धांतानां सर्वमीमांसानां श्रुतीनां वेदोपनिषदां गीतिकायाःश्रीमद्भगवद्गीतायाश्च भाष्याणि व्याख्यानानि ततान चकार। तनुविस्तारे लिट् परस्मैदं । पुराणरामायणभारतानां तात्पर्यं विनिर्णयं च तात्पर्याणां विशेषनिर्णयःतात्पर्यविनिर्णयः तं तथा चकार । तंत्रं प्रधाने सिद्धांते तंतुवाये परिच्छद इत्यमरः ।।३९।। तार्किकेंति । तार्किकद्विरदपुंजभंजने तार्किका एव द्विरदाः हस्तिनः तार्किकद्विरदा तेषां पुंजानि समूहानि तानि भंजतीति तार्किकद्विरदपुंजभंजनः तस्मिन् तथा मध्वकेसरिणि मध्वाख्यकेसरी तस्मिन् तथा । जृंभिते उत्कृष्टेसति मायिगोमायवःमायिन एव गोमायवः मृगधूर्तकाः संकटेन भयेन च दशदिशःपराद्रवन् द्रुद्रवणे लङ् । दंती दंतावलो हस्ती द्विरदोनेकपो द्विप इत्यमरः गोमायुर्मृगधूर्तक इत्यमरः ।।४०।। व्यद्योतिष्ठेति । श्रीमध्वःमध्वविजयाख्यकाव्यं च व्यद्योतिष्ठ बभौ ।

व्यद्योतिष्ठ विचित्रवृत्तरचितः संपूर्णविद्याकरः कृष्णस्याद्भुतवीर्यवर्णनपरोन नानार्थसंघोज्वनः ।
शर्वेंद्रादिसुवंद्यलालितपदो मायातिनां भीषणः श्रीमध्वोविजयी च मध्वविजयो नारायणप्रोद्भवः ॥४१॥
इतिश्रीमणिमंजर्यां अष्मःसर्गःसमाप्तः ॥८॥ श्रीकृष्णार्पणमस्तु । श्रीलक्ष्मीनृसिंहार्पणमस्तु ॥ ॥ ॥

कथंभूतःश्रीमध्वःविचित्रवृत्तरचितःविचित्राणिआ श्चर्यकराणि वृत्तानि चरित्राणि रचितानि येन स तथा । उत्तरनिपातः संपूर्णविद्याकरः समस्तविद्यानामाकरः खनिःकृष्णस्य वासिष्ठकृष्णस्य अद्भुतवीर्यवर्णनपरः अद्भुतानि आश्चर्यकराणि वीर्याणि सामर्थ्यानि तेषां वर्णनं । तस्मिन् परो मुख्यः नानार्थसंघोज्वलःनानार्थानां अनेकप्रकारार्थानां संघेन समूहेन उज्वलः शर्वेंद्रादिसुवंद्यलालितमदःसुष्टु वंदितु-योग्ये सुवंद्ये शर्वे–

द्रादिभिः सुवंद्ये लालिते पदे यस्य स तथा । मायाविनां मिथ्याज्ञानिनां भीषणःभयंकरः विशेषेण जयोऽस्तीति तथा । नारायणप्रोद्भवः नारायणाज्ञया प्रकर्षेणोद्भवो अवतारो यस्य स तथा । श्रीमध्वःश्रीमानंदतीर्थार्यः व्यद्योतिष्ठ बभौ । कथंभूतो मध्वविजयः विचित्रवृत्तरचितः विचित्राणि वृत्तानि शरवंद्योपेंद्रवृत्तानि तैः रचितो निर्मितः संपूर्णविद्याकरःकृष्णास्याद्भुतवीर्यवर्ण नपरश्च पूर्ववत् । नानार्थसंघोज्वलः अनेकप्रकारार्थसमूहेन प्रकाशत इति तथा । शर्वेंद्रादिसुवंद्यलालितपदः रुद्रमहेंद्रादिभिः सुष्टु वंद्यानि लालितानि संकीर्तितानि पदानि वा । वयसमूहाःयस्मिन् स तथा । मायाविनां मायावादिनां भीषणः भयंकरःविजयी च नारायणप्रोद्भवः । श्रीमत्त्रिविक्रमपंडिताचार्यसुतनारायण पंडिताचार्येण प्रोद्भवो निर्माणं यस्य स तथा । मध्वविजयश्च मध्वविजयाख्यकाव्यं च व्यद्योतिष्ट बभौ वीत्युपसर्गः । द्युतिदीप्तौ कर्तरि लङात्मनेपदं वृत्तं पद्ये वरिष्ठे च वृत्तादौ दृढनिष्ठिते । खनिस्त्रियामाकरः स्यात्इत्यमरः । अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यमरः । रागभेदे च सरले लालितं विप्रसुंदर इति शब्दनिर्णये ।।४१।। इति श्रीमत्कविकुलतिलकत्रिविक्रम पंडिताचार्यसुतनारायणपंडिताचार्यकृतमणिमञ्जरीटीकायां अष्टमः सर्गः समाप्तः ।।८।।

श्रीकृष्णार्पणमस्तु समाप्तश्चाऽयं ग्रंथःश्रीवेदव्यासार्पणमस्तु ।। श्रीलक्ष्मीनृसिंहार्पणमस्तु ।।



इति मणिमञ्जरी